# महर्षि गौतम प्रणीतं न्यायदर्शनम्

## न्याय दर्शनम्

### प्रथमोऽध्यायः प्रथम आह्निकः

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः १ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः २ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ३ इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ४ अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ५ प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ६ आप्तोपदेशः शब्दः ७ स द्विविधो दृष्टादृष्टार्थत्वात् ८ आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ९ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १० चेष्टेन्द्रियार्थाश्रयः शरीरम् ११ घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः १२ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि १३ गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः १४ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् १५ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् १६ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः १७ प्रवर्तनालक्षणादोषाः १८ पुनरुत्पत्तिः प्रेत्यभावः १९ प्रवृत्तिदोषजनितोऽर्थः फलम् २० बाधनालक्षणं दुःखम् २१ तदत्यन्तविमोक्षोऽपवर्गः २२ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः २३ यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् २४ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः २५ तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः २६ स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् २७ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः २८ समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः २९ यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ३० अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ३१ प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ३२ साध्यनिर्देशः प्रतिज्ञा ३३ उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ३४ तथा वैधर्म्यात् ३५ साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ३६

तद्विपर्ययाद्वा विपरीतम् ३७ उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ३८ हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ३९ अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ४० विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ४१

इति प्रथम आह्निकः

प्रथमोऽध्यायः द्वितीय आह्निकः

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः १ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः २ स प्रतिपक्षस्थापनाहीनो वितण्डा ३ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ४ अनैकान्तिकः सव्यभिचारः ५ सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ६ यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ७ साध्याविशिष्टः साध्यत्वात्साध्यसमः ८ कालात्ययापदिष्टः कालातीतः ९ वचनविघातोऽर्थविकल्पोपपत्त्या छलम् १० तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च ११ अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् १२ सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् १३ धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् १४ वाक्छलमेवोपचारच्छलं तदविशेषात् १५ न तदर्थान्तरभावात् १६ अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः १७ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः १८ विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् १९ तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् २०

इति द्वितीय आह्निकः इति प्रथमोऽध्यायः

द्वितीयोऽध्यायः प्रथम आह्निकः

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः १ विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च २ विप्रतिपत्तौ च सम्प्रतिपत्तेः ३ अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ४ तथात्यन्तसं-

शयस्तद्धर्मसातत्योपपत्तेः ५ यथोक्ताध्यवसायादेव तद्विशेषापेक्षा-त्संशयेनासंशयो नात्यन्तसंशयो वा ६ यत्र संशयस्तत्रैवमुत्तरोत्तर-प्रसङ्गः ७ प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ८ पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसंनिकर्षात्प्रत्यक्षोत्पत्तिः ९ पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः १० युगपत्सिद्धौ प्रत्यर्थनियतत्वात्क्रम-वृत्तित्वाभावो बुद्धीनाम् ११ त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः १२ सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः १३ तत्प्रामाण्ये वा न सर्व-प्रमाणविप्रतिषेधः १४ त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्त-त्सिद्धेः १५ प्रमेया च तुलाप्रामाण्यवत् १६ प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः १७ तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः १८ न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः १९ क्वचिन्निवृत्तिदर्शनाद-निवृत्तिदर्शनाच्च क्वचिदनेकान्तः २० प्रत्यक्षलक्षणानुपपत्तिरसम-ग्रवचनात् २१ नात्ममनसोः संनिकर्षाभावे प्रत्यक्षोत्पत्तिः २२ दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः २३ ज्ञानलिङ्गत्वादात्मनो नानवरोधः २४ तदयौगपद्यलिङ्गत्वाच्च न मनसः २५ प्रत्यक्षनिमित्तत्वाच्चेन्द्रि-यार्थयोः संनिकर्षस्य स्वशब्देन वचनम् २६ सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः संनिकर्षनिमित्तत्वात् २७ तैश्चापदेशो ज्ञानविशेषाणाम् २८ व्याहतत्वादहेतुः २९ नार्थविशेषप्राबल्यात् ३० प्रत्यक्षमनु-मानमेकदेशग्रहणादुपलब्धेः ३१ न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ३२ साध्यत्वादवयविनि संदेहः ३३ सर्वाग्रहणमवयव्यसिद्धेः ३४ धारणाकर्षणोपपत्तेश्च ३५ सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वाद-णूनाम् ३६ रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ३७ नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ३८ वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ३९ तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ४० नातीतानागतयोरितरेतरापेक्षासिद्धिः ४१ वर्तमानाभावे सर्वा-ग्रहणम्प्रत्यक्षानुपपत्तेः ४२ कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ४३ अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ४४ प्रसिद्धसाध-र्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ४५ प्रत्यक्षेणाप्रत्यक्षसिद्धेः ४६ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ४७ तथेत्युपसंहारा-

दुपमानसिद्धेर्नाविशेषः ४८ शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ४९ उपलब्धेरद्विप्रवृत्तित्वात् ५० सम्बन्धाच्च ५१ आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ५२ पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ५३ शब्दार्थव्यवस्थानादप्रतिषेधः ५४ न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ५५ जातिविशेषे चानियमात् ५६ तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ५७ न कर्मकर्तृसाधनवैगुण्यात् ५८ अभ्युपेत्य कालभेदे दोषवचनात् ५९ अनुवादोपपत्तेश्च ६० वाक्यविभागस्य चार्थग्रहणात् ६१ विध्यर्थवादानुवादवचनविनियोगात् ६२ विधिर्विधायकः ६३ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ६४ विधिविहितस्यानुवचनमनुवादः ६५ नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ६६ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ६७ मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ६८

इति प्रथम आह्निकः

द्वितीयोऽध्यायः द्वितीय आह्निकः

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् १ शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः २ अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ३ अनर्थापत्तावर्थापत्त्यभिमानात् ४ प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ५ तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ६ नाभावप्रामाण्यं प्रमेयासिद्धेः ७ लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ८ असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ९ तत्सिद्धेरलक्षितेष्वहेतुः १० न लक्षणावस्थितापेक्षासिद्धेः ११ प्रागुत्पत्तेरभावोपपत्तेश्च १२ आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च १३ न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च १४ तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः १५ संतानानुमानविशेषणात् १६ कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् १७ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च १८ तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः १९ अनुपलम्भादप्यनु-

पलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् २० अनुपलम्भात्मक-त्वादनुपलब्धेरहेतुः २१ अस्पर्शत्वात् २२ न कर्मानित्यत्वात् २३ नाणुनित्यत्वात् २४ सम्प्रदानात् २५ तदन्तरालानुपलब्धेरहेतुः २६ अध्यापनादप्रतिषेधः २७ उभयोः पक्षयोरन्यतरस्याध्यापना-दप्रतिषेधः २८ अभ्यासात् २९ नान्यत्वेऽप्यभ्यासस्योपचारात् ३० अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ३१ तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ३२ विनाशकारणानुपलब्धेः ३३ अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ३४ उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ३५ पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ३६ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ३७ अस्पर्शत्वादप्रतिषेधः ३८ विभक्त्यन्तरोपपत्तेश्च समासे ३९ विकारादेशोपदेशात्संशयः ४० प्रकृतिविवृद्धौ विकारविवृद्धेः ४१ न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ४२ द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ४३ नातुल्यप्रकृतीनां विकारविकल्पात् ४४ द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ४५ न विकारधर्मा-नुपपत्तेः ४६ विकारप्राप्तानामपुनरापत्तेः ४७ सुवर्णादीनां पुनरापत्तेरहेतुः ४८ न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ४९ नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ५० नित्यानामतीन्द्रि-यत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ५१ अनवस्था-यित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ५२ विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ५३ प्रकृत्यनि-यमाद्वर्णविकाराणाम् ५४ अनियमे नियमान्नानियमः ५५ नियमा-नियमविरोधादनियमे नियमाच्चाप्रतिषेधः ५६ गुणान्तरापत्त्युपमर्दह्रा-सवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः ५७ ते विभक्त्यन्ताः पदम् ५८ व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ५९ या शब्द-समूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुप-चाराद्व्यक्तिः ६० न तदनवस्थानात् ६१ सहचरणस्थानतादर्थ्य-वृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तु-चन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ६२ आकृति-

स्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः ६३ व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गा-त्प्रोक्षणादीनां मृद्गवके जातिः ६४ नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ६५ व्यक्त्याकृतिजातयस्तु पदार्थः ६६ व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ६७ आकृतिर्जातिलिङ्गाख्या ६८ समानप्रसवात्मिका जातिः ६९
इति द्वितीय आह्निकः इति द्वितीयोऽध्यायः

## तृतीयोऽध्यायः प्रथम आह्निकः

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् १ न विषयव्यवस्थानात् २ तद्व्य-वस्थानादेवात्मसद्भावादप्रतिषेधः ३ शरीरदाहे पातकाभावात् ४ तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ५ न कार्याश्रयकर्तृवधात् ६ सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ७ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ८ एकविनाशे द्वितीयाविनाशान्नैकत्वम् ९ अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः १० दृष्टान्तविरोधादप्रतिषेधः ११ इन्द्रियान्तरविकारात् १२ न स्मृतेः स्मर्तव्यविषयत्वात् १३ तदात्मगुणसद्भावादप्रतिषेधः १४ नात्मप्रतिपत्तिहेतूनां मनसि सम्भ-वात् १५ ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् १६ नियमश्च निरनुमानः १७ पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः १८ पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः १९ नोष्णशीतवर्षाकालनिमित्त-त्वात्पञ्चात्मकविकाराणाम् २० प्रेत्याहाराभ्यासकृतात्स्तन्याभिलाषात् २१ अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् २२ नान्यत्र प्रवृत्त्यभावात् २३ वीतरागजन्मादर्शनात् २४ सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः २५ न संकल्पनिमित्तत्वाद्रागादीनाम् २६ पार्थिवं गुणान्तरोपलब्धेः २७ पार्थिवाप्यतैजसं तद्गुणोपलब्धेः २८ निःश्वासोच्छ्वासोपलब्धेश्चा-तुर्भौतिकम् २९ गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ३० श्रुतिप्रामाण्याच्च ३१ कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ३२ महदणुग्रहणात् ३३ रश्म्यर्थसंनिकर्ष-विशेषात्तद्ग्रहणम् ३४ तदनुपलब्धेरहेतुः ३५ नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ३६ द्रव्यगुणधर्मभेदाच्चोपलब्धिनि-यमः ३७ अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ३८

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ३९ मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ४० न रात्रावप्यनुपलब्धेः ४१ वाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ४२ अभिव्यक्तौ चाभिभवात् ४३ नक्तञ्चरनयनरश्मिदर्शनाच्च ४४ अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ४५ कुड्यान्तरितानुपलब्धेरप्रतिषेधः ४६ अप्रतिघातात्संनिकर्षोपपत्तिः ४७ आदित्यरश्मेः स्फटिकान्तरेऽपि दाह्येऽविघातात् ४८ नेतरेतरधर्मप्रसङ्गात् ४९ आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ५० दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ५१ स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ५२ त्वगव्यतिरेकात् ५३ न युगपदर्थानुपलब्धेः ५४ विप्रतिषेधाच्च न त्वगेका ५५ इन्द्रियार्थपञ्चत्वात् ५६ न तदर्थबहुत्वात् ५७ गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ५८ विषयत्वाव्यतिरेकादेकत्वम् ५९ न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ६० भूतगुणविशेषोपलब्धेस्तादात्म्यम् ६१ गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ६२ अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ६३ न सर्वगुणानुपलब्धेः ६४ एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ६५ विष्टं ह्यपरम्परेण ६६ न पार्थिवाप्ययोः प्रत्यक्षत्वात् ६७ पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ६८ तद्व्यवस्थानं तु भूयस्त्वात् ६९ सगुणानामिन्द्रियभावात् ७० तेनैव तस्याग्रहणाच्च ७१ न शब्दगुणोपलब्धेः ७२ तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ७३

इति प्रथम आह्निकः

## तृतीयोऽध्यायः द्वितीय आह्निकः

कर्माकाशसाधर्म्यात्संशयः १ विषयप्रत्यभिज्ञानात् २ साध्यसमत्वादहेतुः ३ न युगपदग्रहणात् ४ अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ५ क्रमवृत्तित्वादयुगपद्ग्रहणम् ६ अप्रत्यभिज्ञानञ्च विषयान्तरव्यासङ्गात् ७ न गत्यभावात् ८ स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ९ स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः १० नियमहेत्व-

भावाद्यथादर्शनमभ्यनुज्ञा ११ नोत्पत्तिविनाशकारणोपलब्धेः १२ क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः १३ लिङ्गतो ग्रहणान्नानुपलब्धिः १४ न पयसः परिणामगुणान्तरप्रादुर्भावात् १५ व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् १६ क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः १७ नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् १८ युगपज्ज्ञेयानुपलब्धेश्च न मनसः १९ तदात्मगुणत्वेऽपि तुल्यम् २० इन्द्रियैर्मनसः संनिकर्षाभावात्तदनुत्पत्तिः २१ नोत्पत्तिकारणानपदेशात् २२ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः २३ अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् २४ ज्ञानसमवेतात्मप्रदेशसंनिकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः २५ नान्तःशरीरवृत्तित्वान्मनसः २६ साध्यत्वादहेतुः २७ स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः २८ न तदाशुगतित्वान्मनसः २९ न स्मरणकालानियमात् ३० आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ३१ व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ३२ प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ३३ ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ३४ तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ३५ परश्वादिष्वारम्भनिवृत्तिदर्शनात् ३६ नियमानियमौ तु तद्विशेषकौ ३७ यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ३८ परिशेषाद्यथोक्तहेतूपपत्तेश्च ३९ स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ४० प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ४१ कर्मानवस्थायिग्रहणात् ४२ अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ४३ हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ४४ प्रदीपार्चिःसंतत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ४५ द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ४६ यावच्छरीरभावित्वाद्रूपादीनाम् ४७ न पाकजगुणान्तरोत्पत्तेः ४८ प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ४९ शरीरव्यापित्वात् ५० न केशनखादिष्वनुपलब्धेः ५१ त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ५२ शरीरगुणवैधर्म्यात्

५३ न रूपादीनामितरेतरवैधर्म्यात् ५४ ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ५५ ज्ञानायौगपद्यादेकं मनः ५६ न युगपदनेकक्रियोपलब्धेः ५७ अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ५८ यथोक्तहेतुत्वाच्चाणु ५९ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ६० भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ६१ न साध्यसमत्वात् ६२ नोत्पत्तिनिमित्तत्वान्मातापित्रोः ६३ तथाहारस्य ६४ प्राप्तौ चानियमात् ६५ शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ६६ एतेनानियमः प्रत्युक्तः ६७ तददृष्टकारितमिति चेत्पुनस्तत्प्रसङ्गोऽपवर्गे ६८ मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ६९ नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ७० अणुश्यामतानित्यत्ववदेतत्स्यात् ७१ नाकृताभ्यागमप्रसङ्गात् ७२

इति द्वितीय आह्निकः इति तृतीयोऽध्यायः

## चतुर्थोऽध्यायः प्रथम आह्निकः

प्रवृत्तिर्यथोक्ता १ तथा दोषाः २ तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ३ नैकप्रत्यनीकभावात् ४ व्यभिचारादहेतुः ५ तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ६ निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ७ न दोषलक्षणावरोधान्मोहस्य ८ निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ९ आत्मनित्यत्वे प्रेत्यभावसिद्धिः १० व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ११ न घटाद्धटानिष्पत्तेः १२ व्यक्ताद्धटनिष्पत्तेरप्रतिषेधः १३ अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् १४ व्याघातादप्रयोगः १५ नातीतानागतयोः कारकशब्दप्रयोगात् १६ न विनष्टेभ्योऽनिष्पत्तेः १७ क्रमनिर्देशादप्रतिषेधः १८ ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् १९ न पुरुषकर्माभावे फलानिष्पत्तेः २० तत्कारितत्वादहेतुः २१ अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् २२ अनिमित्तनिमित्तत्वान्नानिमित्ततः २३ निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः २४ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् २५ नानित्यतानित्यत्वात् २६ तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् २७ नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् २८ सर्वं नित्यम्पञ्चभूतनित्यत्वात् २९ नोत्पत्तिविनाशकार-

णोपलब्धेः ३० तल्लक्षणावरोधादप्रतिषेधः ३१ नोत्पत्तितत्कारणोपलब्धेः ३२ न व्यवस्थानुपपत्तेः ३३ सर्वं पृथग्भावलक्षणपृथक्त्वात् ३४ नानेकलक्षणैरेकभावनिष्पत्तेः ३५ लक्षणव्यवस्थानादेवाप्रतिषेधः ३६ सर्वमभावो भावेष्वितरेतराभावसिद्धेः ३७ न स्वभावसिद्धेर्भावानाम् ३८ न स्वभावसिद्धिरापेक्षिकत्वात् ३९ व्याहतत्वादयुक्तम् ४० संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ४१ न कारणावयवभावात् ४२ निरवयवत्वादहेतुः ४३ सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ४४ न सद्यः कालान्तरोपभोग्यत्वात् ४५ कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ४६ प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ४७ नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ४८ उत्पादव्ययदर्शनात् ४९ बुद्धिसिद्धं तु तदसत् ५० आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ५१ प्रीतेरात्माश्रयत्वादप्रतिषेधः ५२ न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ५३ तत्सम्बन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः ५४ विविधबाधनायोगाद्दुःखमेव जन्मोत्पत्तिः ५५ न सुखस्याप्यान्तरालनिष्पत्तेः ५६ बाधनानिर्वृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ५७ दुःखविकल्पे सुखाभिमानाच्च ५८ ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ५९ प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ६० समारोपणादात्मन्यप्रतिषेधः ६१ पात्रचयान्तानुपपत्तेश्च फलाभावः ६२ सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः ६३ न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य ६४ न क्लेशसंततेः स्वाभाविकत्वात् ६५ प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ६६ अणुश्यामतानित्यत्ववद्वा ६७ न संकल्पनिमित्तत्वाच्च रागादीनाम् ६८

इति प्रथम आह्निकः

## चतुर्थोऽध्यायः द्वितीय आह्निकः

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः १ दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः २ तन्निमित्तं त्ववयव्यभिमानः ३ विद्याविद्याद्वैविध्यात्संशयः ४ तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ५ वृत्त्य-

नुपपत्तेरपि तर्हि न संशयः ६ कृत्स्नैकदेशावृत्तित्वादवयवानामवय-
व्यभावः ७ तेषु चावृत्तेरवयव्यभावः ८ पृथक्चावयवेभ्योऽवृत्तेः
९ न चावयव्यवयवाः १० एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानु-
पपत्तेरप्रश्नः ११ अवयवान्तराभावेऽप्यवृत्तेरहेतुः १२ केशसमूहे
तैमिरिकोपलब्धिवत्तदुपलब्धिः १३ स्वविषयानतिक्रमेणेन्द्रियस्य
पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः १४ अवय-
वावयविप्रसङ्गश्चैवमाप्रलयात् १५ न प्रलयोऽणुसद्भावात् १६ परं
वा त्रुटेः १७ आकाशव्यतिभेदात्तदनुपपत्तिः १८ आकाशासर्वगतत्वं
वा १९ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः
२० शब्दसंयोगविभवाच्च सर्वगतम् २१ अव्यूहाविष्टम्भविभुत्वानि
चाकाशधर्माः २२ मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः २३
संयोगोपपत्तेश्च २४ अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः २५
बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भा-
वानुपलब्धिवत्तदनुपलब्धिः २६ व्याहतत्वादहेतुः २७ तदाश्र-
यत्वादपृथग्ग्रहणम् २८ प्रमाणतश्चार्थप्रतिपत्तेः २९ प्रमाणानुपप-
त्त्युपपत्तिभ्याम् ३० स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः
३१ मायागन्धर्वनगरमृगतृष्णिकावद्वा ३२ हेत्वभावादसिद्धिः ३३
स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ३४ मिथ्योपलब्धेर्विनाश-
स्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ३५ बुद्धेश्चैवं
निमित्तसद्भावोपलम्भात् ३६ तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्यो-
पपत्तिः ३७ समाधिविशेषाभ्यासात् ३८ नार्थविशेषप्राबल्यात्
३९ क्षुदादिभिः प्रवर्तनाच्च ४० पूर्वकृतफलानुबन्धात्तदुत्पत्तिः
४१ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ४२ अपवर्गेऽप्येवं
प्रसङ्गः ४३ न निष्पन्नावश्यम्भावित्वात् ४४ तदभावश्चापवर्गे ४५
तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ४६
ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ४६ तं शिष्यगुरुसब्रह्मचा-
रिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात् ४७ प्रतिपक्षहीनमपि वा
प्रयोजनार्थमर्थित्वे ४८ तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे
वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ४९ ताभ्यां विगृह्य

कथनम् ५०

इति द्वितीय आह्निकः इति चतुर्थोऽध्यायः

पञ्चमोऽध्यायः प्रथम आह्निकः

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्ग-प्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुप-लब्धिनित्यानित्यकार्यसमाः १ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्म-विपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ २ गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ३ साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्याव-र्ण्यविकल्पसाध्यसमाः ४ किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्र-तिषेधः ५ साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ६ प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ७ घटादिनिष्पत्तिदर्शनात्पीडने चाव्यभिचारादप्रतिषेधः ८ दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ९ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः १० प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ११ तथा-भावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः १२ सामान्यदृ-ष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः १३ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः १४ उभयसाधर्म्यात्प्रक्रि-यासिद्धेः प्रकरणसमः १५ प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः १६ त्रैकाल्यानुपपत्तेर्हेतोरहेतुसमः १७ न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः १८ प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रति-षेधः १९ अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः २० अनुक्तस्यार्था-पत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः २१ एक-धर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः २२ क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः २३ उभयका-रणोपपत्तेरुपपत्तिसमः २४ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः २५ निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः २६ कारणान्तरादपि

तद्धर्मोपपत्तेरप्रतिषेधः २७ तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः २८ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः २९ ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ३० साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ३१ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसामर्थ्यात् ३२ दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ३३ नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ३४ प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ३५ प्रयत्नकार्यानेकत्वात्कार्यसमः ३६ कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ३७ प्रतिषेधेऽपि समानो दोषः ३८ सर्वत्रैवम् ३९ प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ४० प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ४१

इति प्रथम आह्निकः

## पञ्चमोऽध्यायः द्वितीय आह्निकः

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि १ प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः २ प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ३ प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ४ पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ५ अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ६ प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ७ वर्णक्रमनिर्देशवन्निरर्थकम् ८ परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ९ पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् १० अवयवविपर्यासवचनमप्राप्तकालम् ११ हीनमन्यतमेनाप्यवयवेन न्यूनम् १२ हेतूदाहरणाधिकमधिकम् १३ शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् १४ अर्थादापन्नस्य

स्वशब्देन पुनर्वचनं पुनरुक्तम् १५ विज्ञातस्य परिषदा त्रिरभिहित-स्याप्यप्रत्युच्चारणमननुभाषणम् १६ अविज्ञातं चाज्ञानम् १७ उत्तर-स्याप्रतिपत्तिरप्रतिभा १८ कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः १९ स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा २० निग्रह-स्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् २१ अनिग्रहस्थाने निग्रह-स्थानाभियोगो निरनुयोज्यानुयोगः २२ सिद्धान्तमभ्युपेत्यानियमात्क-थाप्रसङ्गोऽपसिद्धान्तः २३ हेत्वाभासाश्च यथोक्ताः २४

इति द्वितीय आह्निकः

इति पञ्चमोऽध्यायः

इति न्यायदर्शनम्

# महर्षि कणाद प्रणीतं वैशेषिकदर्शनम्

## वैशेषिकदर्शनम्

### प्रथमोऽध्यायः प्रथम आह्निकः

अथातो धर्मं व्याख्यास्यामः १ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः २ तद्वचनादाम्नायस्य प्रामाण्यम् ३ धर्मविशेषप्रसूताद्द्रव्यगुण-कर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्व-ज्ञानान्निःश्रेयसम् ४ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ५ रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ६ उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ७ सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ८ द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ९ द्रव्याणि द्रव्यान्तरमार-भन्ते गुणाश्च गुणान्तरम् १० कर्म कर्मसाध्यं न विद्यते ११ न द्रव्यं कार्यं कारणं च बधति १२ उभयथा गुणाः १३ कार्यविरोधि कर्म १४ क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम् १५ द्रव्याश्रय्यगुण-वान्संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् १६ एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्म लक्षणम् १७ द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् १८ तथा गुणः १९ संयोगविभागवेगानां कर्म समानम् २० न द्रव्याणां कर्म २१ व्यतिरेकात् २२ द्रव्याणां द्रव्यं कार्यं सामान्यम् २३ गुणवैधर्म्यान्न कर्मणां कर्म २४ द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च २५ असमवायात्सामान्यकार्यं कर्म न विद्यते २६ संयोगानां द्रव्यम् २७ रूपाणां रूपम् २८ गुरु-त्वप्रयत्नसंयोगानामुत्क्षेपणम् २९ संयोगविभागाश्च कर्मणाम् ३० कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ३१

इति प्रथम आह्निकः

### प्रथमोऽध्यायः द्वितीय आह्निकः

कारणाभावात्कार्याभावः १ न तु कार्याभावात्कारणाभावः २ सामान्य विशेष इति बुद्ध्यपेक्षम् ३ भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव ४ द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ५ अन्यत्रान्त्येभ्यो

विशेषेभ्यः ६ सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ७ द्रव्यगुण-कर्मभ्योऽर्थान्तरं सत्ता ८ गुणकर्मसु च भावान्न कर्म न गुणः ९ सामान्यविशेषाभावेन च १० अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ११ सामान्यविशेषाभावेन च १२ तथा गुणेषु भावाद्गुणत्वमुक्तम् १३ सामान्यविशेषाभावेन च १४ कर्मसु भावात्कर्मत्वमुक्तम् १५ सामा-न्यविशेषाभावेन च १६ सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः १७

इति द्वितीय आह्निकः इति प्रथमोऽध्यायः

द्वितीयोऽध्यायः प्रथम आह्निकः

रूपरसगन्धस्पर्शवती पृथिवी १ रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः २ तेजो रूपस्पर्शवत् ३ स्पर्शवान्वायुः ४ त आकाशे न विद्यन्ते ५ सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ६ त्रपुसी-सलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ७ विषाणी ककुद्मान्प्रान्तेबालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ८ स्पर्शश्च वायोः ९ न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः १० अद्रव्यवत्त्वेन द्रव्यम् ११ क्रियावत्त्वाद्गुणवत्त्वाच्च १२ अद्रव्यवत्त्वेन नित्यत्वमुक्तम् १३ वायोर्वायुसम्मूर्च्छनं नानात्वलिङ्गम् १४ वायुसंनिकर्षे प्रत्यक्षा-भावाद्दृष्टं लिङ्गं न विद्यते १५ सामान्यतो दृष्टाच्चाविशेषः १६ तस्मादा-गमिकम् १७ संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् १८ प्रत्यक्षप्रवृत्त-त्वात्संज्ञाकर्मणः १९ निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् २० तदलिङ्गमेकद्रव्यत्वात्कर्मणः २१ कारणान्तरानुक्लृप्तिवैधर्म्याच्च २२ संयोगादभावः कर्मणः २३ कारणगुणपूर्वकः कार्यगुणो दृष्टः २४ कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः २५ परत्र समवाया-त्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः २६ परिशेषाल्लिङ्गमाकाशस्य २७ द्रव्यत्वनित्यत्वे वायुना व्याख्याते २८ तत्त्वं भावेन २९ शब्द-लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ३० तदनुविधानादेकपृथक्त्वं चेति ३१

इति प्रथम आह्निकः

## द्वितीयोऽध्यायः द्वितीय आह्निकः

पुष्पवस्त्रयोः सति संनिकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् १ व्यवस्थितः पृथिव्यां गन्धः २ एतेनोष्णता व्याख्याता ३ तेजस उष्णता ४ अप्सु शीतता ५ अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ६ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ७ तत्त्वं भावेन ८ नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति ९ इत इदमिति यतस्तद्दिश्यं लिङ्गम् १० द्रव्यत्वनित्यत्वे वायुना व्याख्याते ११ तत्त्वं भावेन १२ कार्यविशेषेण नानात्वम् १३ आदित्यसं योगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची १४ तथा दक्षिणा प्रतीची उदीची च १५ एतेन दिगन्तरालानि व्याख्यातानि १६ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः १७ दृष्टं च दृष्टवत् १८ यथादृष्टमयथादृष्टत्वाच्च १९ विद्याविद्यातश्च संशयः २० श्रोत्रग्रहणो योऽर्थः स शब्दः २१ तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्य उभयथा दृष्टत्वात् २२ एकद्रव्यत्वान्न द्रव्यम् २३ नापि कर्माचाक्षुषत्वात् २४ गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् २५ सतो लिङ्गाभावात् २६ नित्यवैधर्म्यात् २७ अनित्यश्चायं कारणतः २८ न चासिद्धं विकारात् २९ अभिव्यक्तौ दोषात् ३० संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ३१ लिङ्गाच्चानित्यः शब्दः ३२ द्वयोस्तु प्रवृत्त्योरभावात् ३३ प्रथमाशब्दात् ३४ सम्प्रतिपत्तिभावाच्च ३५ संदिग्धाः सति बहुत्वे ३६ संख्याभावः सामान्यतः ३७

इति द्वितीय आह्निकः इति द्वितीयोऽध्यायः

## तृतीयोऽध्यायः प्रथम आह्निकः

प्रसिद्धा इन्द्रियार्थाः १ इन्द्रियार्थाप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः २ सोऽनपदेशः ३ कारणाज्ञानात् ४ कार्येषु ज्ञानात् ५ अज्ञानाच्च ६ अन्यदेव हेतुरित्यनपदेशः ७ अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ८ संयोगि समवाय्येकार्थसमवायि विरोधि च ९ कार्यं कार्यान्तरस्य १० विरोध्यभूतं भूतस्य ११ भूतमभूतस्य १२ भूतो भूतस्य १३ प्रसिद्धिपूर्वकत्वादपदेशस्य १४ अप्रसिद्धोऽनपदेशोऽसन्संदिग्धश्चानप-

देशः १५ यस्माद्विषाणी तस्मादश्वः १६ यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् १७ आत्मेन्द्रियार्थसंनिकर्षाद्यन्निष्पद्यते तदन्यत् १८ प्रवृत्तिनिवृत्तिश्च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् १९

इति प्रथम आह्निकः

## तृतीयोऽध्यायः द्वितीय आह्निकः

आत्मेन्द्रियार्थसंनिकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् १ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते २ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ३ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ४ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ५ यज्ञदत्त इति संनिकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ६ सामान्यतो दृष्टाच्चाविशेषः ७ तस्मादागमिकः ८ अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ९ यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति १० दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात्प्रत्यक्षवत्प्रत्ययः ११ देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः १२ संदिग्धस्तूपचारः १३ अहमिति प्रत्यगात्मनि भावात्परत्राभावादर्थान्तरप्रत्यक्षः १४ देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः १५ संदिग्धस्तूपचारः १६ न तु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः १७ अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः १८ सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् १९ व्यवस्थातो नाना २० शास्त्रसामर्थ्याच्च २१

इति द्वितीय आह्निकः इति तृतीयोऽध्यायः

## चतुर्थोऽध्यायः प्रथम आह्निकः

सदकारणवन्नित्यम् १ तस्य कार्यं लिङ्गम् २ कारणभावात्कार्यभावः ३ अनित्य इति विशेषतः प्रतिषेधभावः ४ अविद्या ५ महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः ६ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ७ अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः

८ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ९ तस्याभावादव्यभिचारः १० संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ११ अरूपिष्वचाक्षुषाणि १२ एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् १३

इति प्रथम आह्निकः

## चतुर्थोऽध्यायः द्वितीय आह्निकः

तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् १ प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते २ गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ३ अणुसंयोगस्त्वप्रतिषिद्धः ४ तत्र शरीरं द्विविधं योनिजमयोनिजं च ५ अनियतदिग्देशपूर्वकत्वात् ६ धर्मविशेषाच्च ७ समाख्याभावाच्च ८ संज्ञाया अनादित्वात् ९ सन्त्ययोनिजाः १० वेदलिङ्गाच्च ११

इति द्वितीय आह्निकः इति चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः प्रथम आह्निकः

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म १ तथा हस्तसंयोगाच्च मुसले कर्म २ अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ३ तथात्मसंयोगो हस्तकर्मणि ४ अभिघातान्मुसलसंयोगाद्धस्ते कर्म ५ आत्मकर्म हस्तसंयोगाच्च ६ संयोगाभावे गुरुत्वात्पतनम् ७ नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ८ प्रयत्नविशेषान्नोदनविशेषः ९ नोदनविशेषादुदसनविशेषः १० हस्तकर्मणा दारककर्म व्याख्यातम् ११ तथा दग्धस्य विस्फोटने १२ प्रयत्नाभावे प्रसुप्तस्य चलनम् १३ तृणे कर्म वायुसंयोगात् १४ मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् १५ इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः १६ नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च १७ संस्काराभावे गुरुत्वात्पतनम् १८

इति प्रथम आह्निकः

पञ्चमोऽध्यायः द्वितीय आह्निकः

नोदनापीडनात्संयुक्तसंयोगाच्च पृथिव्यां कर्म १ तद्विशेषेणादृष्टकारितम् २ अपां संयोगाभावे गुरुत्वात्पतनम् ३ द्रवत्वात्स्यन्दनम् ४ नाड्यो वायुसंयोगादारोहणम् ५ नोदनापीडनात्संयुक्तसंयोगाच्च ६ वृक्षाभिसर्पणमित्यदृष्टकारितम् ७ अपां संघातो विलयनं च तेजःसंयोगात् ८ तत्र विस्फूर्जथुर्लिङ्गम् ९ वैदिकं च १० अपां संयोगाद्विभागाच्च स्तनयित्नोः ११ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् १२ अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसंश्चाद्यकर्मादृष्टकारितम् १३ हस्तकर्मणा मनसः कर्म व्याख्यातम् १४ आत्मेन्द्रियमनोऽर्थसंनिकर्षात्सुखदुःखम् १५ तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः संयोगः १६ अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि १७ तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः १८ द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः १९ तेजसो द्रव्यान्तरेणावरणाच्च २० दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि २१ एतेन कर्माणि गुणाश्च व्याख्याताः २२ निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः २३ कारणं त्वसमवायिनो गुणाः २४ गुणैर्दिग्व्याख्याता २५ कारणेन कालः २६

इति द्वितीय आह्निकः इति पञ्चमोऽध्यायः

षष्ठोऽध्यायः प्रथम आह्निकः

बुद्धिपूर्वा वाक्यकृतिर्वेदे १ ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् २ बुद्धिपूर्वो ददातिः ३ तथा प्रतिग्रहः ४ आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ५ तद्दुष्टभोजने न विद्यते ६ दुष्टं हिंसायाम् ७ तस्य समभिव्याहारतो दोषः ८ तददुष्टे न विद्यते ९ पुनर्विशिष्टे प्रवृत्तिः १० समे हीने वा प्रवृत्तिः ११ एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् १२ तथा विरुद्धानां त्यागः १३ हीने परे त्यागः १४ समे आत्मत्यागः परत्यागो वा १५ विशिष्टे आत्मत्याग इति १६

इति प्रथम आह्निकः

षष्ठोऽध्यायः द्वितीय आह्निकः

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय १ अभिषेचनोपवास-ब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय २ चातुराश्रम्यमुपधा अनुपधाश्च ३ भावदोष उपधादोषोऽनुपधा ४ यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ५ अशुचीति शुचि प्रतिषेधः ६ अर्थान्तरं च ७ अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद्विद्यते वार्थान्तरत्वाद्यमस्य ८ असति चाभावात् ९ सुखाद्रागः १० तन्मयत्वाच्च ११ अदृष्टाच्च १२ जातिविशेषाच्च १३ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः १४ तत्संयोगो विभागः १५ आत्मगुणकर्मसु मोक्षो व्याख्यातः १६

इति द्वितीय आह्निकः इति षष्ठोऽध्यायः

सप्तमोऽध्यायः प्रथम आह्निकः

उक्ता गुणाः १ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च २ एतेन नित्येषु नित्यत्वमुक्तम् ३ अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ४ अनित्येष्वनित्या द्रव्यानित्यत्वात् ५ कारणगुणपूर्वकाः पृथिव्यां पाकजाः ६ एकद्रव्यत्वात् ७ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ८ कारणबहुत्वाच्च ९ अतो विपरीतमणु १० अणु महदिति तस्मिन्विशेषभावाद्विशेषाभावाच्च ११ एककालत्वात् १२ दृष्टान्ताच्च १३ अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः १४ कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः १५ अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः १६ एतेन दीर्घत्वह्रस्वत्वे व्याख्याते १७ अनित्येऽनित्यम् १८ नित्ये नित्यम् १९ नित्यं परिमण्डलम् २० अविद्या च विद्यालिङ्गम् २१ विभवान्महानाकाशस्तथा चात्मा २२ तदभावादणु मनः २३ गुणैर्दिग्व्याख्याता २४ कारणे कालः २५

इति प्रथम आह्निकः

सप्तमोऽध्यायः द्वितीय आह्निकः

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् १ तथा पृथक्त्वम् २

एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ३ निःसंख्यत्वात्कर्मगुणानां सर्वैकत्वं न विद्यते ४ भ्रान्तं तत् ५ एकत्वाभावाद्भक्तिस्तु न विद्यते ६ कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ७ एतदनित्ययोर्व्याख्यातम् ८ अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ९ एतेन विभागो व्याख्यातः १० संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ११ कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति १२ युतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते १३ गुणत्वात् १४ गुणोऽपि विभाव्यते १५ निष्क्रियत्वात् १६ असति नास्तीति च प्रयोगात् १७ शब्दार्थावसम्बन्धौ १८ संयोगिनो दण्डात्समवायिनो विशेषाच्च १९ सामयिकः शब्दादर्थप्रत्ययः २० एकदिक्काभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्यां परमपरं च २१ कारणपरत्वात्कारणापरत्वाच्च २२ परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः २३ कर्मभिः कर्माणि २४ गुणैर्गुणाः २५ इहेदमिति यतः कार्यकारणयोः स समवायः २६ द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः २७ तत्त्वं भावेन २८

इति द्वितीय आह्निकः इति सप्तमोऽध्यायः

## अष्टमोऽध्यायः प्रथम आह्निकः

द्रव्येषु ज्ञानं व्याख्यातम् १ तत्रात्मा मनश्चाप्रत्यक्षे २ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ३ गुणकर्मसु संनिकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ४ सामान्यविशेषेषु सामान्यविशेषाभावात्तदेव ज्ञानम् ५ सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ६ द्रव्ये द्रव्यगुणकर्मापेक्षम् ७ गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ८ समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ९ द्रव्येष्वनितरेतरकारणाः १० कारणायौगपद्यात्कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ११

इति प्रथम आह्निकः

## अष्टमोऽध्यायः द्वितीय आह्निकः

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् १ दृष्टेषु भावाददृष्टेष्वभावात् २ अर्थ इति द्रव्यगुणकर्मसु ३ द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ४ भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ५ तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ६

इति द्वितीय आह्निकः इत्यष्टमोऽध्यायः

## नवमोऽध्यायः प्रथम आह्निकः

क्रियागुणव्यपदेशाभावात्प्रागसत् १ सदसत् २ असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ३ सच्चासत् ४ यच्चान्यदसदतस्तदसत् ५ असदिति भूतप्रत्यक्षाभावाद्भूतस्मृतेर्विरोधिप्रत्यक्षवत् ६ तथाभावे भावप्रत्यक्षत्वाच्च ७ एतेनाघटोऽगौरधर्मश्च व्याख्यातः ८ अभूतं नास्तीत्यनर्थान्तरम् ९ नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः १० आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ११ तथा द्रव्यान्तरेषु प्रत्यक्षम् १२ असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च १३ तत्समवायात्कर्मगुणेषु १४ आत्मसमवायादात्मगुणेषु १५

इति प्रथम आह्निकः

## नवमोऽध्यायः द्वितीय आह्निकः

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् १ अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति २ एतेन शाब्दं व्याख्यातम् ३ हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ४ अस्येदं बुद्ध्यपेक्षितत्वात् ५ आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः ६ तथा स्वप्नः ७ स्वप्नान्तिकम् ८ धर्माच्च ९ इन्द्रियदोषात्संस्कारदोषाच्चाविद्या १० तद्दुष्टज्ञानम् ११ अदुष्टं विद्या १२ आर्षं सिद्धदर्शनं च धर्मेभ्यः १३

इति द्वितीय आह्निकः इति नवमोऽध्यायः

दशमोऽध्यायः प्रथम आह्निकः

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः १ संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः २ तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ३ अभूदित्यपि ४ सति च कार्यादर्शनात् ५ एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ६ एकदेशे इत्येकस्मिञ्शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ७

इति प्रथम आह्निकः

दशमोऽध्यायः द्वितीय आह्निकः

कारणमिति द्रव्ये कार्यसमवायात् १ संयोगाद्वा २ कारणे समवायात्कर्माणि ३ तथा रूपे कारणैकार्थसमवायाच्च ४ कारणसमवायात्संयोगः पटस्य ५ कारणकारणसमवायाच्च ६ संयुक्तसमवायादग्नेर्वैशेषिकम् ७ दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ८ तद्वचनादाम्नायस्य प्रामाण्यमिति ९

इति द्वितीय आह्निकः

इति दशमोऽध्यायः

इति वैशेषिकदर्शनम्

# महर्षि कपिल प्रणीतं सांख्यदर्शनम्

## सांख्य दर्शनम्

### प्रथमोऽध्यायः

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः १ न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् २ प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात्पुरुषार्थत्वम् ३ सर्वासम्भवात्सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ४ उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ५ अविशेषश्चोभयोः ६ न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ७ स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ८ नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ९ शुक्लपटवद्बीजवच्चेत् १० शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ११ न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् १२ न देशयोगतोऽप्यस्मात् १३ नावस्थातो देहधर्मत्वात्तस्याः १४ असङ्गोऽयं पुरुष इति १५ न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च १६ विचित्रभोगानुपपत्तिरन्यधर्मत्वे १७ प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् १८ न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते १९ नाविद्यातोऽप्यवस्तुना बन्धायोगात् २० वस्तुत्वे सिद्धान्तहानिः २१ विजातीयद्वैतापत्तिश्च २२ विरुद्धोभयरूपा चेत् २३ न तादृक्पदार्थाप्रतीतेः २४ न वयं षट्पदार्थवादिनो वैशेषिकादिवत् २५ अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् २६ नानादिविषयोपरागनिमित्तकोऽप्यस्य २७ न बाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावोऽपि देशव्यवधानाच्छ्रुघ्नस्थपाटलिपुत्रस्थयोरिव २८ द्वयोरेकदेशलब्धोपरागान्न व्यवस्था २९ अदृष्टवशाच्चेत् ३० न द्वयोरेककालायोगादुपकार्योपकारकभावः ३१ पुत्रकर्मवदिति चेत् ३२ नास्ति हि तत्र स्थिर एकात्मा यो गर्भाधानादिना संस्क्रियेत ३३ स्थिरकार्यासिद्धेः क्षणिकत्वम् ३४ न प्रत्यभिज्ञाबाधात् ३५ श्रुतिन्यायविरोधाच्च ३६ दृष्टान्तासिद्धेश्च ३७ युगपज्जायमानयोर्न कार्यकारणभावः ३८ पूर्वापाय उत्तरायोगात् ३९ तद्भावे तदयोगादुभयव्यभिचारादपि न ४० पूर्वभावमात्रे न नियमः ४१ न विज्ञानमात्रं बाह्यप्रतीतेः ४२ तदभावे तदभावाच्छून्यं तर्हि ४३ शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ४४ अपवादमात्रमबुद्धानाम् ४५ उभयपक्षसमानक्षमत्वादयमपि ४६

अपुरुषार्थत्वमुभयथा ४७ न गतिविशेषात् ४८ निष्क्रियस्य तदसम्भवात् ४९ मूर्त्तत्वाद्घटादिवत्समानधर्मापत्तावपसिद्धान्तः ५० गतिश्रुतिरप्युपाधियोगादाकाशवत् ५१ न कर्मणाप्यतद्धर्मत्वात् ५२ अतिप्रसक्तिरन्यधर्मत्वे ५३ निर्गुणादिश्रुतिविरोधश्चेति ५४ तद्योगोऽप्यविवेकान्न समानत्वम् ५५ विपर्ययाद्बन्धः ५६-१ नियतकारणात् तदुच्छित्तिर्ध्वान्तवत् ५६-२ प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ५७ वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः ५८ युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ५९ अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः ६० सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान्महतोऽहंकारोऽहंकारात्पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ६१ स्थूलात्पञ्चतन्मात्रस्य ६२ बाह्याभ्यन्तराभ्यां तैश्चाहंकारस्य ६३ तेनान्तःकरणस्य ६४ ततः प्रकृतेः ६५ संहतपरार्थत्वात्पुरुषस्य ६६ मूले मूलाभावादमूलं मूलम् ६७ पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ६८ समानः प्रकृतेर्द्वयोः ६९ अधिकारित्रैविध्यान्न नियमः ७० महदाख्यमाद्यं कार्यं तन्मनः ७१ चरमोऽहंकारः ७२ तत्कार्यत्वमुत्तरेषाम् ७३ आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ७४ पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ७५ परिच्छिन्नं न सर्वोपादानम् ७६ तदुत्पत्तिश्रुतेश्च ७७ नावस्तुनो वस्तुसिद्धिः ७८ अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ७९ भावे तद्योगेन तत्सिद्धिरभावे तदभावात्कुतस्तरां तत्सिद्धिः ८० न कर्मण उपादानायोगात् ८१ नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ८२ तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ८३ दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोकः ८४ काम्येऽकाम्येऽपि साध्यत्वाविशेषात् ८५ निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ८६ द्वयोरेकतरस्य वाप्यसंनिकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत्तत् ८७ त्रिविधं प्रमाणं तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ८८ यत्सम्बद्धं सत्तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ८९ योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ९० लीनवस्तुलब्धातिशयसम्बन्धाद्वादोषः ९१ ईश्वरासिद्धेः ९२ मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ९३ उभयथाप्यसत्करत्वम् ९४

मुक्तात्मनः प्रशंसा उपासा सिद्धस्य वा ९५ तत्संनिधानादधिष्ठातृत्वं मणिवत् ९६ विशेषकार्येष्वपि जीवानाम् ९७ सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ९८ अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ९९ प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् १०० आप्तोपदेशः शब्दः १०१ उभयसिद्धिः प्रमाणात्तदुपदेशः १०२ सामान्यतो दृष्टादुभयसिद्धिः १०३ चिदवसानो भोगः १०४ अकर्तुरपि फलोपभोगोऽन्नाद्यवत् १०५ अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः १०६ नोभयं च तत्त्वाख्याने १०७ विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य १०८ सौक्ष्म्यात्तदनुपलब्धिः १०९ कार्यदर्शनात्तदुपलब्धेः ११० वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् १११ तथाप्येकतरदृष्ट्यैकतरसिद्धेर्नापलापः ११२ त्रिविधविरोधापत्तेः ११३ नासदुत्पादो नृशृङ्गवत् ११४ उपादाननियमात् ११५ सर्वत्र सर्वदा सर्वासम्भवात् ११६ शक्तस्य शक्यकरणात् ११७ कारणभावाच्च ११८ न भावे भावयोगश्चेत् ११९ नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ १२० नाशः कारणलयः १२१ पारम्पर्यतोऽन्वेषणाद्बीजाङ्कुरवत् १२२ उत्पत्तिवद्वादोषः १२३ हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् १२४ आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा १२५ त्रिगुणाचेतनत्वादि द्वयोः १२६ प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम् १२७ लघ्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं गुणानाम् १२८ उभयान्यत्वात्कार्यत्वं महदादेर्घटादिवत् १२९ परिमाणात् १३० समन्वयात् १३१ शक्तितश्चेति १३२ तद्धाने प्रकृतिः पुरुषो वा १३३ तयोरन्यत्वे तुच्छत्वम् १३४ कार्यात्कारणानुमानं तत्साहित्यात् १३५ अव्यक्तं त्रिगुणाल्लिङ्गात् १३६ तत्कार्यतस्तत्सिद्धेर्नापलापः १३७ सामान्येन विवादाभावाद्धर्मवन्न साधनम् १३८ शरीरादिव्यतिरिक्तः पुमान् १३९ संहतपरार्थत्वात् १४० त्रिगुणादिविपर्ययात् १४१ अधिष्ठानाच्चेति १४२ भोक्तृभावात् १४३ कैवल्यार्थं प्रवृत्तेः १४४ जडप्रकाशायोगात्प्रकाशः १४५ निर्गुणत्वान्न चिद्धर्मा १४६ श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् १४७ सुषुप्त्याद्यसाक्षित्वम् १४८ जन्मादिव्यवस्थातः पुरुषबहुत्वम् १४९ उपाधिभेदेऽप्येकस्य

नानायोग आकाशस्येव घटादिभिः १५० उपाधिर्भिद्यते न तु तद्वान् १५१ एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः १५२ अन्यधर्मत्वेऽपि नारोपात्तत्सिद्धिरेकत्वात् १५३ नाद्वैतश्रुतिविरोधो जातिपरत्वात् १५४ विदितबन्धकारणस्य दृष्ट्या तद्रूपम् १५५ नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः १५६ वामदेवादिर्मुक्तो नाद्वैतम् १५७ अनादावद्य यावदभावाद्भविष्यदप्येवम् १५८ इदानीमिव सर्वत्र नात्यन्तोच्छेदः १५९ व्यावृत्तोभयरूपः १६० अक्षसम्बन्धात्साक्षित्वम् १६१ नित्यमुक्तत्वम् १६२ औदासीन्यं चेति १६३ उपरागात्कर्तृत्वं चित्सांनिध्याच्चित्सांनिध्यात् १६४

इति प्रथमोऽध्यायः

द्वितीयोऽध्यायः

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य १ विरक्तस्य तत्सिद्धेः २ न श्रवणमात्रात्तत्सिद्धिरनादिवासनाया बलवत्त्वात् ३ बहुभृत्यवद्वा प्रत्येकम् ३ प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ४ कार्य-तस्तत्सिद्धेः ५ चेतनोद्देशान्नियमः कराटकमोक्षवत् ६ अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ७ रागविरागयोर्योगः सृष्टिः ८ मह-दादिक्रमेण पञ्चभूतानाम् ९ आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ आरम्भः १० दिक्कालावाकाशादिभ्यः ११ अध्यवसायो बुद्धिः १२ तत्कार्यं धर्मादिः १३ महदुपरागाद्विपरीतम् १४ अभिमानोऽहंकारः १५ एकादशपञ्चतन्मात्रं तत्कार्यम् १६ सात्त्विकमेकादशकं प्रवर्तते वैकृतादहंकारात् १७ कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् १८ आहङ्कारिकत्वश्रुतेर्न भौतिकानि १९ देवतालयश्रुतिर्नारम्भकस्य २० तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च २१ अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने २२ शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् २३ न कल्पनाविरोधः प्रमाणदृष्टस्य २४ उभयात्मकं मनः २५ गुणपरिणामभेदान्नानात्वमवस्थावत् १६ रूपादिरसमलान्त उभयोः २७ द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् २८ त्रयाणां स्वालक्षणयम् २९ सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ३० क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ३१ वृत्तयः पञ्चतय्यः क्लिष्टा-

क्लिष्टाः ३२ तन्निवृत्तावुपशान्तोपरागः स्वस्थः ३३ कुसुमवच्च मणिः ३४ पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ३५ धेनुवद्वत्साय ३६ करणं त्रयोदशविधमवान्तरभेदात् ३७ इन्द्रियेषु साधकतमत्व-गुणयोगात्कुठारवत् ३८ द्वयोः प्रधानं मनो लोकवद्भृत्यवर्गेषु ३९ अव्यभिचारात् ४० तथाशेषसंस्काराधारत्वात् ४१ स्मृत्यानुमानाच्च ४२ सम्भवेन्न स्वतः ४३ आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ४४ तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ४५ समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ४६

इति द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

अविशेषाद्विशेषारम्भः १ तस्माच्छरीरस्य २ तद्बीजात्संसृतिः ३ आविवेकाच्च प्रवर्तनमविशेषाणाम् ४ उपभोगादितरस्य ५ सम्प्रति परिमुक्तो द्वाभ्याम् ६ मातापितृजं स्थूलं प्रायश इतरन्न तथा ७ पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ८ सप्तदशैकं लिङ्गम् ९ व्यक्तिभेदः कर्मविशेषात् १० तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ११ न स्वातन्त्र्यात्तदृते छायावच्चित्रवच्च १२ मूर्तत्वेऽपि न संघातयोगात्तर-णिवत् १३ अनुपरिमाणं तत्कृतिश्रुतेः १४ तदन्नमयत्वश्रुतेश्च १५ पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः १६ पाञ्चभौतिको देहः १७ चातुर्भौतिकमित्येके १८ ऐकभौतिकमित्यपरे १९ न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः २० प्रपञ्चमरणाद्यभावश्च २१ मदशक्तिवच्चेत्प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः २२ ज्ञानान्मुक्तिः २३ बन्धो विपर्ययात् २४ नियत-कारणत्वान्न समुच्चयविकल्पौ २५ स्वप्नजागराभ्यामिव मायिकामायि-काभ्यां नोभयोर्मुक्तिः पुरुषस्य २६ इतरस्यापि नात्यन्तिकम् २७ संकल्पितेऽप्येवम् २८ भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् २९ रागोपहतिर्ध्यानम् ३० वृत्तिनिरोधात्तत्सिद्धिः ३१ धारणासनस्वकर्मणा तत्सिद्धिः ३२ निरोधश्छर्दिविधारणाभ्याम् ३३ स्थिरसुखमासनम् ३४ स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ३५ वैराग्यादभ्यासाच्च ३६ विपर्ययभेदाः पञ्च ३७ अशक्तिरष्टाविंशतिधा तु ३८ तुष्टिर्नवधा

त्प्राश्चतस्य विकारः स्यात् १७ सर्वेषामविशेषात् १८ एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् १९ स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च २० पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् २१ वचनानि त्वपूर्वत्वात् २२ विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना २३ शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते २४ तथोत्तरस्यां ततौ तत्प्रकृतित्वात् २५ प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् २६ अविकारो वार्थशब्दानपायात्स्याद्द्रव्यवत् २७ तथारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् २८ द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् २९ बुधन्वान्पवमानवद्विशेषनिर्देशात् ३० मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ३१ विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ३२ यथोक्तं वा विप्रतिपत्तेर्न चोदना ३३ स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ३४ संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ३५ सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ३६ सर्वस्य वैककर्म्यात् ३७ स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ३८ अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ३९ संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् ४० स्याद्गुणार्थत्वात् ४१ मनोतायां तु वचनादविकारः स्यात् ४२ पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वादृचां प्रविभक्तत्वात् ४३ स्वयोनौ वा सर्वाख्यत्वात् ४४ यूपवदिति चेत् ४५ न कर्मसंयोगात् ४६ कार्यत्वादुत्तरयोर्यथाप्रकृति ४७ समानदेवते वा तृचस्याविभागात् ४८ ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ४९ उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ५० न वा परार्थत्वाद्यज्ञपतिवत् ५१ स्याद्वावाहनस्य तादर्थ्यात् ५२ न वा संस्कारशब्दत्वात् ५३ स्याद्वा द्रव्याभिधानात् ५४ दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ५५ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ५६ अपि वाज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ५७ अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम्

५८ न वा स्याद्गुणशास्त्रत्वात् ५९

इति चतुर्थः पादः

पञ्चमः पादः

आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् १ लिङ्गदर्शनाच्च २ विकल्पो वा समत्वात् ३ क्रमादुपजनोऽन्ते स्यात् ४ लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ५ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ६ एकत्रिके तृचादिषु माध्यन्दिने छंदसां श्रुतिभूतत्वात् ७ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ८ यथानिवेशञ्च प्रकृतिवत्संख्यामात्रविकारत्वात् ९ त्रिकस्तृचे धुर्ये स्यात् १० एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ११ चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् १२ प्राप्तिस्तु रात्रिशब्दसम्बन्धात् १३ अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् १४ स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् १५ आगमेन वाभ्यासस्याश्रुतित्वात् १६ संख्यायाश्च पृथक्त्वनिवेशात् १७ पराक्शब्दत्वात् १८ उक्ताविकाराच्च १९ अश्रुतित्वान्नेति चेत् २० स्यादर्थचोदितानां परिमाणशास्त्रम् २१ आवापवचनं वाभ्यासे नोपपद्यते २२ साम्नां चोत्पत्तिसामर्थ्यात् २३ धूर्येष्वपीति चेत् २४ नावृत्तिधर्मत्वात् २५ बहिष्पवमाने तु ऋगागमः सामैकत्वात् २६ अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् २७ अविशेषान्नेति चेत् २८ स्यात्तद्धर्मत्वात्प्रकृतिवदभ्यस्येतासंख्यापूरणात् २९ यावदुक्तं वा कृतपरिमाणत्वात् ३० अधिकानाञ्च दर्शनात् ३१ कर्मस्वपीति चेत् ३२ न चोदितत्वात् ३३ षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ३४ प्रकृतौ चाभावदर्शनात् ३५ अयज्ञवचनाच्च ३६ प्रकृतौ वा शिष्टत्वात् ३७ प्रकृतिदर्शनाच्च ३८ आम्नातं परिसंख्यार्थम् ३९ उक्तमभावदर्शनम् ४० गुणादयज्ञत्वम् ४१ तस्याग्रयणाद्ग्रहणम् ४२ उक्थ्याच्च वचनात् ४३ तृतीयसवने वचनात्स्यात् ४४ अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ४५ उक्थ्यविच्छे-

दवचनत्वाच्च ४६ आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात्पुनराधेयवत् ४७ विच्छेदः स्तोमसामान्यात् ४८ उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ४९ संस्तुतशस्त्रो वा तदङ्गत्वात् ५० लिङ्गदर्शनाच्च ५१ वचनात्संस्थान्यत्वम् ५२ अभावादतिरात्रेषु गृह्यते ५३ अन्वयो वानारभ्यविधानात् ५४ चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ५५ अपि वा संख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन्संख्यार्थभावात् ५६ भोजने तत्संख्यं स्यात् ५७ जगत्साम्नि सामाभावादृक्तः सामतदाख्यं स्यात् ५८ उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ५९ मुख्येन वा नियम्येत ६० निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ६१ ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ६२ अपि वा धर्माविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ६३ धारासंयोगाच्च ६४ कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ६५ तद्देशानां वाग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ६६ परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ६७ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ६८ प्रतिकर्षञ्च दर्शयति ६९ पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ७० तुल्यधर्मत्वाच्च ७१ तथा च लिङ्गदर्शनम् ७२ सादनं चापि शेषत्वात् ७३ लिङ्गदर्शनाच्च ७४ प्रदानं चापि सादनवत् ७५ न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ७६ त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ७७ अपि वाहर्गणेष्वग्निवत्समानविधानं स्यात् ७८ द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ७९ व्यूढो वा लिङ्गदर्शनात्समूढविकारः स्यात् ८० कामसंयोगात् ८१ तस्योभयथा प्रवृत्तिरैककर्म्यात् ८२ एकादशिनीवत्त्र्यनीका परिवृत्तिः स्यात् ८३ स्वस्थानविवृद्धिर्वाह्नामप्रत्यक्षसंख्यत्वात् ८४ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ८५ वचनात्परिवृत्तिरैकादशिनेषु ८६ लिङ्गदर्शनाच्च ८७ छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ८८

इति पञ्चमः पादः

## षष्ठमः पादः

एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् १ तृचे वा लिङ्गदर्शनात् २ स्वर्दृशं प्रतिवीक्षणं कालमात्रं परार्थत्वात् ३ पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वात् ४ विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम् ५ समासस्त्वेकादशिनेषु तत्प्रकृतित्वात् ६ विहारप्रतिषेधाच्च ७ श्रुतितो वा लोकवद्विभागः स्यात् ८ विहारप्रकृतित्वाच्च ९ विशये च तदासत्तेः १० त्रयस्तथेति चेत् ११ न समत्वात्प्रयाजवत् १२ सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् १३ विधेस्तु विप्रकर्षः स्यात् १४ वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् १५ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् १६ त्रिवृद्वदिति चेत् १७ न प्रकृतावकृत्स्नसंयोगात् १८ विधित्वान्नेति चेत् १९ स्याद्विशये तन्न्यायत्वात्कर्माविभागात् २० प्रकृतेश्चाविकारात् २१ त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् २२ स्तोमस्य वा तल्लिङ्गत्वात् २३ उभयसाम्नि विश्वजिद्वद्विभागः स्यात् २४ पृष्ठार्थे वातदर्थत्वात् २५ लिङ्गदर्शनाच्च २६ पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् २७ अन्ते वा कृतकालत्वात् २८ अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् २९ अन्ते वा कृतकालत्वात् ३० आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ३१ मधु न दीक्षिता ब्रह्मचारित्वात् ३२ प्राश्येत वा यज्ञार्थत्वात् ३३ मानसमहरन्तरं स्याद्भेदव्यपदेशात् ३४ तेन च संस्तवात् ३५ अहरन्ताच्च परेण चोदना ३६ पक्षे संख्या सहस्रवत् ३७ अहरङ्गं वांशुवच्चोदनाभावात् ३८ दशमविसर्गवचनाच्च ३९ दशमेऽहनीति च तद्गुणशास्त्रात् ४० संख्यासामञ्जस्यात् ४१ पश्चतिरेके चैकस्य भावात् ४२ स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ४३ वचनादतदन्तत्वम् ४४ सत्रमेकः प्रकृतिवत् ४५ वचनात्तु बहूनां स्यात् ४६ अपदेशः स्यादिति चेत् ४७ नैकव्यपदेशात् ४८ संनिवापं च दर्शयति ४९ बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम् ५० अन्ये स्युरृत्विजः प्रकृतिवत् ५१ अपि वा यजमानाः स्युरृत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ५२ कर्तृसंस्कारो वचनादाधातृ-

वदिति चेत् ५३ स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ५४ स्वाम्या-ख्याः स्युर्गृहपतिवदिति चेत् ५५ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ५६ बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते ५७ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ५८ अदक्षि-णत्वाच्च ५९ द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ६० यजतिचोदनादहीनत्वं स्वामिनां चा-स्थितपरिमाणत्वात् ६१ अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्म-भेदः स्यात् ६२ सर्वस्य वैककर्म्यात् ६३ पृषदाज्यवद्वाह्नां गुणशास्त्रं स्यात् ६४ ज्यौतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्त-स्मान्नासां विकारः स्यात् ६५ द्वादशाहे तु वचनात्प्रत्यहं दक्षिणाभेद-स्तत्प्रकृतित्वात्परेषु तासां संख्याविकारः स्यात् ६६ परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ६७ भेदस्तु गुणसंयोगात् ६८ प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ६९ एकार्थत्वान्ने-ति चेत् ७० स्यादुत्पत्तौ कालभेदात् ७१ विभज्य तु संस्कारवचनाद्द्वा-दशाहवत् ७१ लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ७२ यावदर्थे वार्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ७३ आग्नेये कृत्स्नविधिः ७४ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ७५ वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ७६ तत्राहर्गणेऽर्थाद्वासः प्रक्लृप्तिः स्यात् ७७ मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ७८ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ७९

इति षष्ठमः पादः

सप्तमः पादः

पशोरेकहविष्ट्वं समस्तचोदितत्वात् १ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् २ हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ३ आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ४ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ५ अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात्प्रदान-

त्वात्तेषां निरवदानप्रतिषेधः स्यात् ६ अपि वा परिसंख्या स्यादनवदानीयशब्दत्वात् ७ अब्राह्मणे च दर्शनात् ८ शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वं सर्वेषां श्रपणं स्यात् ९ इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् १० त्र्यङ्गैर्वा शरवद्विकारः स्यात् ११ अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् १२ शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् १३ अशास्त्रत्वात्तु नैवं स्यात् १४ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् १५ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् १६ अग्नीधश्च वनिष्ठुरध्यूध्नीवत् १७ अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् १८ स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् १९ द्विभागः स्याद्द्विकर्मत्वात् २० एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् २१ प्रतिप्रस्थातुश्च वपाश्रपणात् २२ अभक्षो वा कर्मभेदात्तस्यां सर्वप्रदानत्वात् २३ विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात् २४ अपि वाग्नेयवद्द्विशब्दत्वं स्यात् २५ न वा शब्दपृथक्त्वात् २६ अधिकं वार्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् २७ प्रतिषेधः स्यादिति चेत् २८ नाश्रुतत्वात् २९ अग्रहणादिति चेत् ३० न तुल्यत्वात् ३१ तथा तद्ग्रहणे स्यात् ३२ अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ३३ ततोऽपि यावदुक्तं स्यात् ३४ स्विष्टकृद्भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ३५ अप्रतिषेधो वा दर्शनादिडायां स्यात् ३६ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ३७ शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थको हि स्यात् ३८ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ३९ प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ४० प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ४१ प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ४२ उपसत्सु यावदुक्तमकर्म स्यात् ४३ स्रौवेण वागुणत्वाच्छेषप्रतिषेधः स्यात् ४४ अप्रतिषिद्धं वा प्रतिषिध्य प्रतिप्रसवात् ४५ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ४६ अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ४७ आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ४८ प्रयाजानां त्वेकदेशप्रतिषेधाद्वाक्यशेषत्वं

तस्मान्नित्यानुवादः स्यात् ४९ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत्स्यात् ५० विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ५१ उभयप्रदेशान्नेति चेत् ५२ शरेष्वपीति चेत् ५३ विरोध्यग्रहणात्तथा शरेष्विति चेत् ५४ तथेतरस्मिन् ५५ श्रुत्यानर्थक्यमिति चेत् ५६ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ५७ सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ५८ अधिकं स्यादिति चेत् ५९ नार्थाभावात् ६० तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ६१ यावच्छ्रुतीति चेत् ६२ न प्रकृतावशब्दत्वात् ६३ विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ६४ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ६५ विरोधित्वाच्च लोकवत् ६६ क्रतोश्च तद्गुणत्वात् ६७ विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ६८ पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ६९ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ७० क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ७१ यथाश्रुतीति चेत् ७२ न चोदनैकत्वात् ७३

इति सप्तमः पादः

## अष्टमः पादः

प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् १ अर्थप्राप्तवदिति चेत् २ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ३ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ४ अपूर्वे चार्थवादः स्यात् ५ शिष्ट्वा तु प्रतिषेधः स्यात् ६ न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ७ पूर्वैश्च तुल्यकालत्वात् ८ उपवादश्च तद्वत् ९ प्रतिषेधादकर्मेति चेत् १० न शब्दपूर्वत्वात् ११ दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात् १२ अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् १३ तस्य वाप्यानुमानिकमविशेषात् १४ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्

१५ अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संदिग्धमाराद्विशेषशिष्टं स्यात् १६ अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम् १७ विकारे तु तदर्थं स्यात् १८ वाक्यशेषो वा क्रतुनाग्रहणात्स्यादनारभ्यविधानस्य १९ मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् २० अनाम्नाते च दर्शनात् २१ प्रतिषेधाच्च २२ अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् २३ मासि ग्रहणं च तद्वत् २४ ग्रहणं वा तुल्यत्वात् २५ लिङ्गदर्शनाच्च २६ ग्रहणं समानविधानं स्यात् २७ मासिग्रहणमभ्यासप्रतिषेधार्थम् २८ उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् २९ तत्संस्कारश्रुतेश्च ३० ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ३१ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ३२ साप्तदश्यवन्नियम्येत ३३ हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ३४ पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ३५ न त्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बन्धस्तस्मादवाक्यशेषत्वम् ३६ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ३७ कृत्स्नत्वात्तु तथा स्तोमे ३८ कर्तुः स्यादिति चेत् ३९ न गुणार्थत्वात्प्राप्ते न चोपदेशार्थः ४० कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ४१ यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ४२ अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ संदेहे श्रुतेर्द्विदेवतार्था स्याद्यथानभिप्रेतस्तथाग्नेयो दर्शनादेकदेवते ४३ विधिं तु बादरायणः ४४ प्रतिषिद्धविज्ञानाद्वा ४५ तथा चान्यार्थदर्शनम् ४६ उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ४७ ध्रौवाद्वा सर्वसंयोगात् ४८ तद्वच्च देवतायां स्यात् ४९ तान्त्रीणां पुराकल्परूपः प्रकरणात् ५० धर्माद्वा स्यात्प्रजापतिः ५१ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ५२ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ५३ अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथा प्रधानं स्यात् ५४ आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे

५५ अग्नीषोमविधानात्तुपौर्णमास्यामुभयत्र विधीयते ५६ प्रतिषिद्ध्य विधानाद्वा विष्णुः समानदेशः स्यात् ५७ तथा चान्यार्थदर्शनम् ५८ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ५९ गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ६० विकारे चाश्रुतित्वात् ६१ द्विपुरोडाशायां स्यादन्तरार्थत्वात् ६२ अजामिकरणार्थत्वाच्च ६३ तदर्थमिति चेन्न तत्प्रधानत्वात् ६४ अशिष्टेन च सम्बन्धात् ६५ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानाद-न्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ६६ उभयोस्तु विधानात् ६७ गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ६८ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ६९ प्रशंसार्थमजामित्वं यथामृतार्थत्वम् ७०

इत्यष्टमः पादः इति दशमोऽध्यायः

एकादशोऽध्यायः प्रथमः पादः

प्रयोजनाभिसम्बन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् १ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत २ अविधानात्तु नैवं स्यात् ३ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ४ अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ५ अर्थभेदस्तु तत्रार्थेहैकार्थ्यादैक-कर्म्यम् ६ शब्दभेदान्नेति चेत् ७ कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तद-र्थत्वात् ८ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ९ आरम्भस्य शब्दपूर्वत्वात् १० एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ११ फलाभावान्नेति चेत् १२ न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् १३ एकशब्द्यादिति चेत् १४ नार्थपृथक्त्वात्समत्वादगुण-त्वम् १५ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसं-योगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत्सर्वप्रयोगे प्रवृत्तिः स्यात् १६ तथा कर्मोपदेशः स्यात् १७ क्रत्वन्तरेषु पुनर्वचनम् १८ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत १९ कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः २० अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः २१ सकृत्तु स्यात्कृतार्थत्वादङ्गवत् २२ शब्दार्थश्च तथा लोके २३ अपि वा सम्प्रयोगे यथाकामी

प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः २४ एकशब्द्यात्तथाङ्गेषु २५ लोके कर्मार्थलक्षणम् २६ क्रियाणामर्थशेषत्वात्प्रत्यक्षतस्तन्निर्वृत्त्यापवर्गः स्यात् २७ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् २८ क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् २९ सकृद्वा कारणैकत्वात् ३० परिमाणं चानियमेन स्यात् ३१ फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ३२ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ३३ पृथक्त्वाद्विधितः परिमाणं स्यात् ३४ अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ३५ अभ्यासो वा छेदनसम्मार्गावदानेषु वचनात्सकृत्त्वस्य ३६ अनभ्यासस्तु वाच्यत्वात् ३७ बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ३८ दृष्टेः प्रयोग इति चेत् ३९ तथेह ४० भक्त्येति चेत् ४१ तथेतरस्मिन् ४२ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ४३ श्रुत्यर्थाविशेषात् ४४ तथा चान्यर्थदर्शनम् ४५ प्रकृत्या च पूर्ववत्तदासत्तेः ४६ उत्तरासु यावत्स्वमपूर्वत्वात् ४७ यावत्स्वं वान्यविधानेनानुवादः स्यात् ४८ साकल्यविधानात् ४९ बह्वर्थत्वाच्च ५० अग्निहोत्रे चाशेषवद्यवागूनियमः प्रतिषेधः कुमाराणाम् ५१ सर्वप्रायिणापि लिङ्गेन संयुज्यते देवताभिसंयोगात् ५२ प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ५३ क्रमकोपश्च यौगपद्यात्स्यात् ५४ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ५५ एकार्थ्यादव्यवायः स्यात् ५६ तथा चान्यार्थदर्शनं कामुकायनः ५७ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ५८ असंसृष्टोऽपि तादर्थ्यात् ५९ विभवाद्वा प्रदीपवत् ६० अर्थात्तु लोके विधितः प्रतिप्रधानं स्यात् ६१ सकृदिज्यां कामुकायनः परिमाणविरोधात् ६२ विधेस्त्वितरार्थत्वात्सकृदिज्या श्रुतिव्यतिक्रमः स्यात् ६३ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ६४ अपि चैकेन संनिधानमविशेषको हेतुः ६५ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ६६ क्वचिद्विधानान्नेति चेत् ६७ न विधेश्चोदितत्वात् ६८ व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ६९ भेदस्तु

कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ७० तथा चान्यार्थदर्शनम् ७१ विधिरिति चेन्न वर्तमानापदेशात् ७२

इति प्रथमः पादः

## द्वितीयः पादः

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् १ अविधिश्चेत्कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानभावः स्यात् २ अङ्गेषु च तदभावः प्रधानं प्रतिनिर्देशाद्यथा द्रव्यदेवतम् ३ यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ४ तथा चान्यार्थदर्शनम् ५ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात् ६ कर्मणोऽश्रुतित्वाच्च ७ अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम् ८ द्रव्यदेवतं तथेति चेत् ९ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः १० तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ११ इष्टिराजसुयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् १२ कालभेदान्नेति चेत् १३ नैकदेशत्वात्पशुवत् १४ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् १५ तथा चान्यार्थदर्शनम् १६ तथा तदवयवेषु स्यात् १७ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् १८ तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात् १९ इष्टिरिति चैकवच्छ्रुतिः २० अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् २१ प्रथमस्य वा कालवचनम् २२ फलैकत्वादिष्टिशब्दो यथान्यत्र २३ वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् २४ कालभेदात्त्वावृत्तिर्देवताभेदे २५ अन्ते यूपाहुतिस्तद्वत् २६ इतरप्रतिषेधो वा २७ अनुवादमात्रमन्तिकस्य २८ अशास्त्रत्वाच्च देशानाम् २९ अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ३० द्रव्यदेवतवत् ३१ साङ्गो वा प्रयोगवचनैकत्वात् ३२ लिङ्गदर्शनाच्च ३३ शब्दविभागाच्च देवतानपनयः ३४ दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं क्रियते

३५ अचोदनेति चेत् ३६ स्यात्पौर्णमासीवत् ३७ प्रयोगचोदनेति चेत् ३८ इहापि मारुत्याः प्रयोगश्चोद्यते ३९ आसादनमिति चेत् ४० नोत्तरेणैकवाक्यत्वात् ४१ अवाच्यत्वात् ४२ आम्नायवचनं तद्वत् ४३ कर्तृभेदस्तथेति चेत् ४४ न समवायात् ४५ लिङ्गदर्शनाच्च ४६ वेदिसंयोगादिति चेत् ४७ न देशमात्रत्वात् ४८ एकवाक्यत्वात् ४९ एकाग्नित्वादपरेषु तन्त्रं स्यात् ५० नाना वा कर्तृभेदात् ५१ पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ५२ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ५३ वाक्यैकत्वे क्रतुसामान्यात् ५४ वपानां चानभिघारणस्य दर्शनात् ५५ पञ्चशारदीयास्तथेति चेत् ५६ न चोदनैकवाक्यत्वात् ५७ यातयामत्वाच्च ५८ संस्काराणां च तद्दर्शनात् ५९ दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ६० समानवचनं तद्वत् ६१ अप्रतिकर्षौ वार्थहेतुत्वात्सहत्वं विधीयते ६१ पूर्वस्मिंश्चावभृथस्य दर्शनात् ६२ दीक्षाणां चोत्तरस्य ६३ समानः कालसामान्यात् ६४ निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ६५ अपनयो वा प्रसिद्धेनाभिसंयोगात् ६६ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ६७ उदयनीये च तद्वत् ६८ प्रतिपत्तिर्वाकर्मसंयोगात् ६९ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ७०

इति द्वितीयः पादः

## तृतीयः पादः

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् १ द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् २ यूपश्चाकर्मकालत्वात् ३ एकयूपं च दर्शयति ४ संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ५ तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ६ सकृन्मानं च दर्शयति ७ स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ८ साधारणे वानुनिष्पत्तिस्तस्य साधारणत्वात् ९ सोमान्ते च प्रतिपत्तिदर्शनात् १० तत्कालो वा प्रस्तरवत् ११ न चोत्पत्तिवाक्यत्

वात्प्रदेशात्प्रस्तरे तथा १२ अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाहनि विकल्पः स्यात् १३ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातः सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् १४ शिष्टे चाभिप्रवृत्तत्वात् १५ वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् १६ यथाह्वानमपीति चेत् १७ पशौ च स पुरोडाशे समानतन्त्रं भवेत् १८ अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात् १९ अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् २० प्रधानापवर्गे वा तदर्थत्वात् २१ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् २२ अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् २३ सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् २४ तत्कालत्वादावर्तेत प्रयोगतो विशेषसम्बन्धात् २५ अप्रयोगाङ्गमिति चेत् २६ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् २७ तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् २८ अग्निवदिति चेत् २९ न प्रयोगसाधारण्यात् ३० लिङ्गदर्शनाच्च ३१ तद्धि तथेति चेत् ३२ नाशिष्टत्वादितरन्यायत्वाच्च ३३ विध्येकत्वादिति चेत् ३४ न कृत्स्नस्य पुनः प्रयोगात्प्रधानवत् ३५ लौकिके तु यथाकामी संस्कारानर्थलोपात् ३६ यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ३७ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ३८ मुख्यधारणं वा मरणस्यानियतत्वात् ३९ यो वा यजनीयेहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ४० न शास्त्रलक्षणत्वात् ४१ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ४२ शब्दासामञ्जस्यमिति चेत् ४३ तथाशिरेऽपि ४४ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः ४५ प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ४६ अग्न्याधेये वाविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ४७ प्रतिपत्तिर्वा यथान्येषाम् ४८ उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ४९ अङ्गविपर्यासो विनावचनादिति चेत् ५० उत्कर्षः संयोगात्कालमात्रमितरत्र ५१ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ५२ न श्रुतिप्रतिषेधात् ५३ विकारस्थाने इति चेत् ५४ न चोदनापृथक्त्वात् ५५ उत्कर्षे सूक्तवाकस्य

न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षैनान्वयः ५६ वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ५७

इति तृतीयः पादः

## चतुर्थः पादः

चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि १ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् २ तथा चान्यार्थदर्शनम् ३ अनियमः स्यादिति चेत् ४ नोपदिष्टत्वात् ५ लाघवापत्तिश्च ६ प्रयोजनैकत्वात् ७ अविशेषार्थौ पुनः श्रुतिः ८ अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनाद्वचनात्कामसंयोगेन ९ क्रत्वर्थायामिति चेन्न वर्णसंयोगात् १० पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ११ लिङ्गदर्शनाच्च १२ वर्तमानापदेशाद्वचनात्तु तन्त्रभेदः स्यात् १३ सहत्वे नित्यानुवादः स्यात् १४ द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् १५ अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने १६ अपि वा फलकर्तृसम्बन्धात्सह प्रयोगः स्यादाग्नेयाग्नीषोमीयवत् १७ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् १८ दीक्षोपसदां च संख्या पृथक्पृथक्प्रत्यक्षसंयोगात् १९ वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् २० तथा चान्यार्थदर्शनम् २१ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् २२ भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् २३ तथा चान्यार्थदर्शनम् २४ श्वासुत्यावचनं तद्वत् २५ पश्वतिरेकश्च २६ सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् २७ अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् २८ अविभागाच्च २९ पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ३० भेदस्तु संदेहाद्देवतान्तरे स्यात् ३१ अर्थाद्वा लिङ्गकर्म स्यात् ३२ प्रतिपाद्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात् ३३ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात् ३४ सकृदिति चेत् ३५ न कालभेदात् ३६ पक्तिभेदात्कुम्भीशूलवपाश्रपणीनां भेदः स्यात् ३७

जात्यन्तरेषु भेदः स्यात्पत्तिवैषम्यात् ३८ वृद्धिदर्शनाच्च ३९ कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ४० प्रतिप्रधानं वा प्रकृतिवत् ४१ सर्वेषां वाभिप्रथमं स्यात् ४२ एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ४३ द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात् ४४ निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ४५ द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ४६ वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ४७ एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ४८ कंडूयने प्रत्यङ्गं कर्मभेदात्स्यात् ४९ अपि वा चोदनैककालमैककर्म्यं स्यात् ५० स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ५१ प्रयाणे त्वार्थनिर्वृत्तेः ५२ उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ५३ न संनिपातित्वादसंनिपातिकर्मणां विशेषग्रहणे कालैकत्वात्सकृद्वचनम् ५४ हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ५५ अध्रिगोश्च विपर्यासात् ५६ करिष्यद्वचनात् ५७

इति चतुर्थः पादः इत्येकादशोऽध्यायः

## द्वादशोऽध्यायः प्रथमः पादः

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्र्यमतुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्याच्छ्रुतिकालनिर्देशात् १ गुणकालविकाराच्च तन्त्रभेदः स्यात् २ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ३ विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ४ एकेषां वा शक्यत्वात् ५ आहोपुरीषकं स्यात् ६ एकाग्निवच्च दर्शनम् ७ जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ८ नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ९ अकर्म वा कृतदूषा स्यात् १० पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ११ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् १२ शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् १३ श्रपणं वाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् १४ हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् १५ असिद्धिर्वान्य-

देशत्वात्प्रधानवैगुरयादवैगुरये प्रसङ्गः स्यात् १६ अनसां च दर्शनात् १७ तद्युक्तत्वं च कालभेदात् १८ मन्त्राश्च संनिपातित्वात् १९ धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते २० तथा व्रतमुपेतत्वात् २१ विप्रतिषेधाच्च २२ सत्यवदिति चेत् २३ न संयोगपृथक्त्वात् २४ ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् २५ शेषवदिति चेन्न वैश्वदेवो हि स्याद्व्यपदेशात् २६ न गुणार्थत्वात् २७ संनहनं च वृत्तत्वात् २८ अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् २९ शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ३० भृतत्वाच्च परिक्रयः ३१ शेषभक्षास्तथेति चेत् ३२ न कर्मसंयोगात् ३३ प्रवृत्तवरणात्प्रति तन्त्रवरणात्प्रतितन्त्रवरणं होतुः क्रियेत ३४ ब्रह्मापीति चेत् ३५ न प्राग्नियमात्तदर्थं हि ३६ निर्दिष्टस्येति चेत् ३७ नाश्रुतत्वात् ३८ होतुस्तथेति चेत् ३९ न कर्मसंयोगात् ४० यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ४१ न वा कृतत्वात्तदुपदेशो हि ४२ देशपृथक्त्वान्मन्त्रो व्यावर्तते ४३ संनहनहरणे तथेति चेत् ४४ नान्यार्थत्वात् ४५

इति प्रथमः पादः

द्वितीयः पादः

विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् १ मांसपाकप्रतिषेधश्च तद्वत् २ निर्देशाद्वा वैदिकानां स्यात् ३ सति चोपासनस्य दर्शनात् ४ अभावदर्शनाच्च ५ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ६ वाक्यशेषो वा दक्षिणेऽस्मिन्ननारभ्यविधानस्य ७ सवनीये छिद्रा-पिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ८ क्रिया वा देवतार्थत्वात् ९ लिङ्गदर्शनाच्च १० हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ११ पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् १२ योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् १३ निशि यज्ञे प्राकृतस्याप्र-वृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् १४ कालवाक्यभेदाच्च तन्त्रभेदः स्यात् १५ वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् १६ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् १७ वैगुण्यादिध्मबर्हिर्न साधयेदग्न्यन्वाधानं च

यदि देवतार्थम् १८ अग्न्यन्वाधानं च यदि देवतार्थम् १९ आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन २० सकृदा-रम्भसंयोगात् २१ स्याद्वा कालस्याशेषभूतत्वात् २२ आरम्भविभागाच्च २३ विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मकत्वम् २४ मुख्यं वा पूर्वचोदनाल्लोकवत् २५ तथा चान्यार्थदर्शनम् २६ अङ्गगुणविरोधे च तादर्थ्यात् २७ परिधेर्द्व्यर्थत्वादुभयधर्मा स्यात् २८ यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् २९ इतरो वा तस्य तत्र विधानादुभयोश्चाङ्गसंयोगः ३० पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चे-दुभयोरश्रुतिभूतत्वात् ३१ पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ३२ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ३३ अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ३४ अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ३५ तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ३६ न वाविरोधात् ३७ अशास्त्रलक्षणत्वाच्च ३८

इति द्वितीयः पादः

तृतीयः पादः

विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् १ अविरोधो वा उपरिवासो हि वत्सत्वक् २ अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्याच्छ्विष्टकृद्दर्शनाच्च ३ आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ४ स्वस्थानत्वाच्च ५ स्विष्टकृच्छ्रपणान्नेति चेद्विकारः पवमानवत् ६ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ७ एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ८ एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ९ अभ्यस्येतार्थवत्त्वादिति चेत् १० नाश्रुतत्वाद्धि ११ सति चाभ्यासशास्त्रत्वात् १२ विकल्पवच्च दर्शयति १३ कालान्तरेऽर्थवत्त्वं स्यात् १४ प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः १५ समुच्चयस्त्वदोषार्थेषु १६ मन्त्राणां कर्मसंयोगः स्वध-र्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् १७ विद्यां प्रतिविधानाद्वा

सर्वकारणं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य १८ भाषास्वरोपदेशे ऐरवत्प्रायवचनप्रतिषेधः स्यात् १९ मन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्तेर्भाषिकश्रुतिः २० विकारः कारणाग्रहणे तन्न्यायत्वाद्दृष्टेऽप्येवम् २१ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् २२ मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वात् २३ संततवचनाद्धारायामादिसंयोगः २४ कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात् २५ आघारे च दीर्घधारत्वात् २६ मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् २७ संख्याविहितेषु समुच्चयोऽसंनिपातित्वात् २८ ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् २९ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ३० विकल्पो वा समुच्चयस्याश्रुतित्वात् ३१ गुणार्थत्वादुपदेशस्य ३२ वषट्कारे नानार्थत्वात्समुच्चयो हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ३३ क्रियमाणानुवादित्वात्समुच्चयो वा हौत्राणाम् ३४ समुच्चयं च दर्शयति ३५

इति तृतीयः पादः

## चतुर्थः पादः

जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् १ समुच्चयं च दर्शयति २ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ३ लिङ्गदर्शनाच्च ४ क्रयेषु तु विकल्पः स्यादेकार्थत्वात् ५ समुच्चयो वा प्रयोगद्रव्यसमवायात् ६ समुच्चयं च दर्शयति ७ संस्कारे च तत्प्रधानत्वात् ८ संख्यासु तु विकल्पः स्याच्छ्रुतिप्रतिषेधात् ९ द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात्तया विकल्पेन नियमप्रधानत्वात् १० द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशुकर्मभेदादेवं सति यथाप्रकृति ११ कपालेऽपि तथेति चेत् १२ न कर्मणः परार्थत्वात् १३ प्रतिपत्तिस्तु शेषत्वात् १४ शृतेऽपि पूर्ववत्स्यात् १५ विकल्पोऽन्वर्थकर्मनियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् १६ उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् १७ असति

चासंस्कृतेषु कर्म स्यात् १८ तस्य च देवतार्थत्वात् १९ विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः २० वचनादसंस्कृतेषु कर्म स्यात् २१ संसर्गे चापि दोषः स्यात् २२ वचनादिति चेदथेतरस्मिन्नुत्सर्गापरिग्रहः कर्मणः कृतत्वात् २३ स आहवनीयः स्यादाहुतिसंयोगात् २४ अन्यो वोद्धत्याहरणात्तस्मिन्तु संस्कारकर्म शिष्टत्वात् २५ स्थानात्तु परिलुप्येरन् २६ नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् २७ नित्यधारणाद्वा प्रतिषेधो गतश्रियः २८ परार्थान्येकः प्रतियन्तिवत्सत्राहीनयो यजमानगणेऽनियमोऽविशेषात् २९ मुख्यो वाविप्रतिषेधात् ३० सत्रे गृहपतिरसंयोगाद्धौत्रवदाम्नायवचनाच्च ३१ सर्वैः वा तदर्थत्वात् ३२ गृहपतिरिति च समाख्या सामान्यात् ३३ विप्रतिषेधे परम् ३४ हौत्रे परार्थत्वात् ३५ वचनं परम् ३६ प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ३७ स्मृतेर्वा स्याद्ब्राह्मणानाम् ३८ फलचमसविधानाच्चेतरेषाम् ३९ सांनाय्येऽप्येवं प्रतिषेधः सौमपीथहेतुत्वात् ४० चतुर्धाकरणे च निर्देशात् ४१ अन्वाहार्ये च दर्शनात् ४२

इति चतुर्थः पादः इति द्वादशोऽध्यायः

अथ श्रीजैमिनिमुनिप्रणीतः सङ्कर्षकाण्डः

प्रथमाध्याये प्रथमः पादः

अनुयजतीत्यनुवषट्कारश्चोद्यते १ स द्रोणकलशात् इज्येत सर्वार्थत्वात् यथाऽऽज्यार्था ध्रुवायाः २ विभक्तानि हवींषि तथा कर्माणि कर्मसंयोगात्पुनरिज्या ३ लिङ्गदर्शनाच्च ४ तन्त्रं प्रदानमेकदेवतत्वाद्यथा दर्शपूर्णमासयोः ५ एककालं तु न भवत्येवेदं कालपृथक्त्वात् ६ सवनभेदाच्च ७ अनुशब्दार्थवत्त्वाच्च ८ आवृत्तिं च दर्शयति ९ एतेन भक्षाश्च व्याख्याताः १० शामित्रं तीर्त्वोत्सृजेदिति कार्ष्णाजिनिः तन्त्रमध्रिगुः पर्यग्निकृतानिति चोद्यते ११ अनन्तरं वा पर्यग्निकरणात् किं प्रत्यक्षां श्रुतिमतिक्रामेद्यथा न प्रयाजा इज्यन्त इति नैकदेशप्रतिषेधः १२ अग्निं चित्वा सौत्रामण्या यजेतेति तत्संयोगेन चोदनात् १३ चयनाङ्गं वा तत्संयोगेन चोदनात् १४ क्रत्वङ्गं वा चित्वेत्यङ्गे नोपपद्यते

यथैता एव निर्वपेदीजान इति १५ सा तदपवर्गे क्रियेत यथा संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति १६ अग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात् इत्येतेन व्याख्यातम् १७ चयनाङ्गं वाऽविप्रतिषेधात् अङ्गदक्षिणा च रथन्तरे वरं ददाति इति १८ अर्थवादसामर्थ्याच्च १९ योऽग्निं चिनुयात् तं दक्षिणाभी राधयेदित्येतेन व्याख्यानम् २० क्रत्वङ्गं वा प्रयोगश्रुतिसंयोगात् २१ गुणचोदना वा प्रीत्याचिख्यासा २२ उल्मुकहरणे रक्षोपहननं श्रूयते तत्प्राजापत्येष्वावर्तेत तत्कालपृथक्त्वात् २३ श्रपणार्थं तु हरणं प्रातस्सवने पुनस्साधारणं कर्म कृतम् २४ एतेने वपाया अग्रतः प्रत्याहरणं व्याख्यातं अविप्रतिषिद्धो हि तस्मिन् श्रपणार्थः २५ अभितो वपां जुहोतीति देशवादो यथा अभितो वृक्षं निधेहीति २६ कर्मवादो वा प्रकरणात् २७ लिङ्गदर्शनाच्च २८ अभितः पुरोडाशमाहुती जुहोतीत्येतेन व्याख्यातम् २९ हविष्कृदेहीत्यध्वर्युरुच्यते प्रकरणात् ३० वाग्वा श्रुतिसंयोगात् ३१ पत्नी वा विधानात् ३२ यःकश्चिद्वा निर्वचनात् ३३ एतेषां वा वाक्यसन्निधानात् ३४ सर्वकर्मणां दैवी हविष्कृदेहीति अविशेषेण श्रूयते ३५ अवहननार्थं वा यथा पत्नी तुल्या श्रूयते ३६ अर्थवादमात्रं वा वाचो हविष्कृत्त्वं यथाऽश्विनोर्बाहुभ्यां निर्वपामीति ३७ मनुष्याः शमितारो वाक्यसन्निधानात् ३८ ऋत्विजो वा शमितारः सन्निधानं नयने श्रूयते शामित्राख्यां लभेरन् यथोद्गातारः ३९ अन्यो वा शमिता सर्वकर्मणामविशेषात् ४० श्रुतिभूतेष्वध्वर्युर्वेदसमाख्यायोगात् ४१ लिङ्गदर्शनाच्च ४२

इति सङ्कर्षकाण्डे प्रथमाध्यायस्य प्रथमः पादः

## अथ द्वितीयः पादः

पत्नीं सन्नह्येति यजमानस्य भार्यायाः पत्नीशब्दसामर्थ्यात् १ मन्त्रवर्णाच्च २ लिङ्गाच्च ३ एवं वा । सर्वासां कर्तृत्वाविशेषात् ४ मन्त्रवर्णाच्च ५ भूयांसि कर्माण्यल्पीयांसो मन्त्राः तानि सर्वाणि मन्त्रवन्ति ते मन्यामहे समशः प्रतिविभज्य पूर्वैः पूर्वाणि कुर्यादुत्तरैरुत्तराण्येवंविषये प्रयुक्तानि यथासमाम्नानं भवन्ति ६ भूयांसो मन्त्राः अल्पीयांसि कर्माणि तत्रैकमन्त्रं कर्माणि कुर्यात् अवशिष्टा

विकल्पार्था यथा यूपद्रव्याणि ७ ऐन्द्रं पुरोडाशं पयसा प्रदाने कुर्यात् श्रुतिसंयोगात् ८ न वाऽनाम्नानात् ९ समानतन्त्रो वैमृधः पौर्णमास्या पयसा तुल्यवत् श्रूयते १० इष्ट्वेत्यपवृज्य विधानात् नानातन्त्रं स्यात् ११ दक्षिणाभेदाच्च १२ स नित्यो यथान्यान्यङ्गानि १३ न वा विप्रतिषेधात् १४ यद्येतानालभेतेत्येतेन व्याख्यातम् १५ अग्रशब्दः पौर्णमासीमधि-कुरुते तत्र ह्याम्नातः १६ प्रक्रमवादो वा वैमृधस्यानित्यत्वात् यथाग्रे कृत्वा नेदानीं करोतीति १७ न द्वे यजेतेत्यभ्युदितेष्टेः पर्वणश्चानन्तर्यात् १८ द्विरिज्यावादो वा न ह्यन्यत् प्रत्यक्षं वचनं विद्यते १९ यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय देवेभ्यः प्रतनुते इति न तन्त्रादौ प्रक्लृप्तत्वात् २० उत्तरस्मिन्पर्वणि दृश्यमाने प्रतीयेत सन्निकर्षोऽभिप्रेतः २१ दक्षिणाग्नौ श्रपणं श्रूयते । तस्याहवनीये प्रदानं यथान्यासामाहुतीनां यदाहवनीये जुह्वति इति २२ दक्षिणाग्नेरेकोल्मुकं धूपाय धरतीत्येकेषां तत्र प्रदानमर्थवत् धारणं यथा पशावतिप्रणीतस्य २३ यस्मिन् श्रपयति तस्मिन् जुहोतीति दक्षिणाग्नौ २४ अप्यनाहिताग्निना कार्यं पितरश्चिन्मावेदयन्तीति २५ स लौकिकेऽग्नौ क्रियेत यथान्यानि कर्माणि २६ तत्र गार्हपत्यस्थानीयमागमयेत् यथा होमार्थे २७ न वा पृथगस्य संस्कारनिमित्तत्वात् २८ तत्र गार्हपत्यशब्दो लुप्येत संस्कारसंयोगात् २९ यत्पौर्णमास्यामग्नीषोमीयं तेनामावास्यायां यजेत कृतलक्षणग्रहणात् ३० अमावास्या विकृता तन्नामधेयं श्रूयते यथा त्रिवृदग्निष्टोमः इति स्तोत्राणां संख्याविकारः ३१ अग्नीषोमीयेण यजेत पौर्णमासीमिति नित्यकामो यथैन्द्रवायवे ३२ पौर्णमासी वा देवता क्रियते इत्येतेन व्याख्यातम् ३३

इति सङ्कर्षकाण्डे प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः

## अथ तृतीयः पादः

सर्वाधिकारोऽविशेषेण श्रूयते १ दोहयोर्वा देवतासामान्यात् २ सह कुम्भीभिरभिक्रामन्नाहेति स्रुक् प्रत्याम्नायः श्रूयते यथा पलाशस्य मध्यमेन पर्णेन जुहोति इति ३ लिङ्गाच्च ४ कर्तृविवृद्धौ होमे प्रदानं प्रति पात्रविवृद्धिः ५ दोहकाले वा विवृद्धिरर्थपृथक्त्वात् यथा पुरोडाशविवृद्धौ चतुर्मुष्टिता

६ कुम्भीभिरित्युत्पन्नाधिकाराः शेषापनयार्थाः यथा सर्वहुतमेककपालं जुहोति इति ७ दारुपात्राणि कुम्भीभिर्विकल्पेरन्नेकार्थत्वात् ८ प्रवृत्तस्य प्रदानस्य पात्रापनयो यथा पात्नीवतं पर्यग्निकृतमुत्सृजेदिति ९ तत्र शेषाः क्रियेरन् पात्रान्यत्वात् १० नापनीतेषु श्रुतत्वात् तद्व्याख्यातम् ११ एतेनोपस्तरणं व्याख्यातम् १२ सन्ततमुच्येत शब्दसंयोगात् १३ यथाकालं वाऽर्थपृथक्त्वात् १४ द्विरिज्या पौर्णमास्यास्तयोरुभयोरविशेषेणाभ्यासः श्रूयते तेषामेतमर्धमासं प्रसुतस्सान्नाय्यं इति १५ उत्तरस्य वा विशेषश्रुतेः १६ सन्ततं यजेतात्यन्तसंयोगात् १७ सकृद्वा नाभ्यासः श्रूयते १८ तस्य व्रतम् यथा दर्शपूर्णमासयोः गुणविकारो हि १९ अन्तरालभूतं यथा चातुर्मास्येषु २० लिङ्गाच्च २१ आदिविकल्पो गुणविकाराणाम् २२ तन्त्रविकल्पो वा चोदनार्थो यावज्जीविकत्वात् २३ यूपविरोहणनैमित्तिकमुत्तरतत्यर्थे विप्रतिषेधात् प्रकृतौ २४ प्रकृतौ कालविप्रतिकर्षात् २५ तमपरमन्ववसाय यजेतेति समीपवादो यथा नदीमन्ववस्यतीति २६ द्रव्योपदेशो वा कर्मार्थत्वात् द्रव्याणाम् २७ लिङ्गाच्च २८ सोमे प्रतिषेधः तस्य द्रव्योपदेशात् २९ सर्वप्रतिषेधो वा विशेषात् ३० द्रव्योपदेशार्था सोमश्रुतिः ३१ साग्निचित्यानां वादः प्रकरणात् ३२ अनग्निचित्यानां वा यथा विश्वजिति ३३ लिङ्गाच्च ३४ सोमे दर्शपूर्णमासप्रकृतीनां बर्हिर्न विद्यते सौमिकं स्तीर्णं भवति प्रसङ्गस्तद्व्याख्यातम् ३५ उक्तं तु स्तीर्णस्योपरि तद्वचनात् ३६ प्लाक्षं सवनीयानां यथा शेषे यथा चतुरवत्ते ३७ अवदानस्तरणार्थं श्रूयते ३८ पशुपुरोडाशार्थमानन्तर्यात् ३९ पुरोडाशार्थं वा यथोत्तरयोरेकशब्देन विधीयते ४० अनुपृष्ठ्यं बर्हिस्तृणीहि इति सन्ततस्य वादो न ह्यन्यत्प्रत्यक्षं विद्यते ४१ यथाभागं व्यावर्तेथाम् इति देवतावादः तयोर्भागौ भवतः ४२ पिण्डवादो वा कर्मार्थत्वान्मन्त्राणाम् ४३ एतेन विभागलिङ्गा व्याख्याताः ४४ विभक्तयोर्वा देवतोपदेशः तल्लिङ्गत्वाच्छब्दस्य ४५ अग्नये त्वाग्नीषोमाभ्यामित्येतेन व्याख्यातम् ४६ पुरोडाशगणे व्यावर्तेथामित्येकैकं पिण्डमपच्छिन्द्यात् ४७ व्यावर्तध्वमिति वा-ऽर्थपृथक्त्वात् तदूहेन व्याख्यातम् ४८ उत्तमयोः यथासमाम्नानं अविप्रतिषेधात् ४९ सर्वत्र देवतागमः ५० उत्तमयोर्वा सन्देहात्

व्यवच्छेदेनेतरे विज्ञायन्ते ५१ चरुपुरोडाशीयाः प्रागधिवापनात् विभज्येरन् तत्र विभागमन्त्रो निवर्तते अन्यकालत्वात् ५२ विद्यते वा हविर्विभागार्थः तानि विभज्यन्ते यथान्यकालाः । प्रयाजाः ५३ एकान्ते चरवस्तथा पुरोडाशास्तद्धर्माविप्रतिषेधात् ५४ व्यतिषक्तेषु पूर्ववदवच्छेदः क्रमसंयोगात् ५५ युगपद्वाऽविप्रतिषेधात् ५६ इदममुष्य चामुष्य च देहीत्येकैकमुपलक्षयेत् साधारणत्वात् द्रव्यस्य यथेदममुष्मै चामुष्मै च देहीति ५७ एतेन व्यतिषक्तेषु देवतोपलक्षणं व्याख्यातम् ५८ सर्वपृष्ठायां नाना हवींषि प्रदाने विभज्यन्ते तत्र विभागमन्त्रः क्रियते यथा चरुपुरोडाशेषु ५९ न हविर्विभागार्थः प्रदानं पुनरेतत्क्रियते ६०

इति संकर्षकाण्डे प्रथमस्याध्यायस्य तृतीयः पादः

## अथ चतुर्थः पादः

कर्मचोदना वाजिनस्य यथाऽऽमिक्षायागः १ अप्रयोजकं वाजिनम् यथा फलीकरणहोमः २ वाजिनेनावसिञ्चेत् इत्यन्यदागमयेद्वाजिभ्यः तदनुपदिष्टम् ३ उत्पन्नाधिकारो वा वाजिनस्य प्रकृतं प्रविभज्यते यथा ध्रौवम् ४ आमिक्षायां स्विष्टकृन्न विद्यते वाजिनस्याम्नानात् प्रत्यामनेत् यथा त्र्यङ्गाणीति ५ नानाकर्मणी भवतस्तद्व्याख्यातम् ६ तस्य वाजिनं निरवदानं यथान्येषाम् हविषाम् ७ अनुवषट्करोति इति अनुविप्रकर्षे नोपपद्यते ८ लिङ्गाच्च ९ विशाखत्वं धर्ममात्रं यथा श्लक्ष्णाग्रता १० नियोजनं वार्थवत्त्वाद्यथा वरुणप्रघासेषु ११ लिङ्गाच्च १२ एतेन यूपकर्म व्याख्यातं तत्संयोगाद्धर्माणाम् १३ ऊर्ध्वं नाभिदघ्नाद्विशाखं यथा तन्त्रं रशना १४ अधस्ताद्वा प्रकृत्युपबन्धात् १५ अग्रमध्यशब्दौ सन्नम्येताम् अग्रमध्यपृथक्त्वात् १६ सहोपरं प्रमाणम् १७ यजमानसंमितौदुम्बरीं भवतीत्येतेन व्याख्यातम् १८ ऊर्ध्वं वा निखातादर्थे श्रूयते यथा पौरुषः प्राकार इति १९ नाभिदघ्ने परिव्ययति इत्येतेन व्याख्यातम् २० यजमानेन यूपः संमित इति विधानात् परिमाणानां यजमानेन सम्मानम् २१ अध्वर्योः प्रमाणं प्रकरणात् यथा शूर्पेण जुहोति इति २२ यथाकामी वा प्रयुक्तं शूर्पम् २३ चतुरो मुष्टीन्निर्वपतीत्येतेन

व्याख्यातम् २४ अध्वर्योर्वा कर्मलक्षणत्वान्मुष्टेः यथा मुष्टिमादत्स्वेति २५ परिवीय वासयतीति वासमात्रं शब्दसंयोगात् २६ अर्थकर्म वा कर्मशब्देन विधीयते यथा परिधौ पशुं नियुञ्जीत इति २७ तासामेकां नाभिदघ्ने परिवीय यथावकाशमितरो विप्रतिषेधात् २८ युगपद्वा विप्रतिषेधात् २९ एतेन ऐकादशिन्यां द्वैरशन्यं व्याख्यातम् ३० विशेषेण वाग्निष्ठस्य रशने तयोरुपादानार्थो न विद्यते प्रमोक्षः पुनः युगपद्भावे स्यात् ३१ तन्त्रं यूपमन्त्रः यूपाभिधानमभिप्रेतम् ३२ वासमात्रं चैतत्स्याद्वासयत्यग्निष्ठे इत्यर्थकर्मणि अनर्थकं स्यात् तासां पुनरादेयत्वात् ३३ लिङ्गाच्च ३४ ऐकादशिनान् प्रतिषिध्य विधीयते ३५ तेषां वैकसङ्ख्याऽप्रतिषेधः श्रूयते यथैकां सामिधेनीमन्वाहेति ३६ लिङ्गाच्च ३७ तेषां पूर्वेद्युः सम्मानं यथा प्रकृतौ ३८ सद्यो वा प्रकृतावर्थलक्षणत्वाद्यथाऽऽज्यस्य पशौ विभागः ३९ तेषां पूर्वेद्युः सम्मानमेके अधीयते तदहर्गणे तन्त्रं स्यात् ४० सद्यः सम्मानमभ्या वर्तेतार्थलक्षणत्वाद्यथाहवनीयसम्मार्जनम् ४१ एतेन सवनीयरशना व्याख्याताः ४२ तन्त्रं वा साधारणत्वाच्छेदनस्य यथा प्रकृतौ तस्य कालोत्कर्षः ४३ अग्रेणाहवनीयं प्राञ्चः सम्मीयेरन् दिक्संयोगात् ४४ उदञ्चो वा अर्धमन्तर्वेद्यर्धं बहिर्वेदीति विज्ञायते ४५ लिङ्गाच्च ४६ तेषामन्तराले यथाकामी न नियमः श्रूयते ४७ इष्टं वचनमेतेषाम् ४८ तथा वेदिसंमितां मिनोतीति ४९ न विकल्पोऽविप्रतिषेधात् ५० यथापूर्वमग्निष्ठदेशमीप्सेयुः मुख्यसाधर्म्यात् ५१ लिङ्गाच्च ५२ उदगपवर्गा यूपा भवन्ति दक्षिणापर्गाः पशवः इत्येतेषां पौर्वापर्यविधिः । तेन मन्यामहे द्वावुत्तमौ दक्षिणोत्तरार्धौ मिनुयात् एवं भूयिष्ठा यथासमाम्नानं भवन्ति ५३ उपरसम्मितां मिनुयात् पितृलोककामस्य मध्येन सम्मितां रशनसम्मितां च मनुष्यलोककामस्य चषालसम्मितामिन्द्रियकामस्येत्यायामतः उपराणि सामान्यानि स्युः तिर्यक्तो मध्यानि रशनाश्च प्रथिम्नश्चषालान्येवमर्थोक्तानि भवन्ति ५४ तामेतामतिरात्रचरम आलभेतेति व्यत्यस्तपशोर्वादः सन्निधानात् ५५ येयमितरा तामिमां प्रजा आपद्य चरन्तीति प्रसृतपशोर्वादो व्यपदेशात् ५६

इति संकर्षकाण्डे प्रथमाध्यायस्य चतुर्थः पादः

समाप्तश्चायं यूपपादः
मीमांसाक्रमेण चतुर्दशाध्यायस्य

## द्वितीयाध्यायस्य प्रथमः पादः

इष्टकाभिरग्निं चितुत इति मृन्मय्यः स्थण्डिलकर्मणि श्रूयन्ते यथा लोके १ वाक्यशेषाच्च २ अश्रिमत्यः शब्दसंयोगात् ३ समचतुरश्राः शब्दैकसमधिगम्यत्वात् ४ अमृन्मयीनामिष्टकाकर्मार्थसंयोगात् ५ आकृतिनियमाद्वाऽन्तरालानि ६ वर्णपृथक्त्वं शब्दसंयोगात् ७ रेखाधिकारो वा प्रकरणात् ८ तासां पाके यथाकामी यथा लोके ९ पक्वा वा तद्विशेषविधानात् १० वचनपक्षे वाऽप्रतिषेधः ११ अग्निने-ष्टकाः पचतीत्येकेषां वाऽऽहत्यविधिः १२ स वैहारिकः प्रकरणात् १३ लौकिकेन वाऽनिर्देशात् १४ मृन्मयीनामिष्टकाशब्दः तासामेतन्नामधेयं यथा लोके १५ सर्वेषां वा सर्वगामित्वात् १६ लिङ्गाच्च १७ सिकतासु तयादेवतं सङ्ख्या चाद्रियेत १८ सिकतासु न सङ्ख्यादि कर्तव्यं विप्रतिषेधात् १८-२ चित्यसंयोगाच्च १९ चरुसर्वौषधमनि-ष्टकम् २० नैर्ऋर्तेष्टके इष्टकाशब्दविधानात्तयादेवतं स्यात् २१ न वा स्यान्निधानस्याविवक्षिततत्वात् २२ साहस्रं चिन्वीत प्रथमं चिन्वान इति क्रत्वधिकारोऽग्निसंयोगात् यथा सहस्रेणेजान इति २३ अग्न्यधिकारो वा चयनसंयोगात् यथा जानुदघ्नं चिन्वीत प्रथमं चिन्वान इति २४ दक्षिणाभिः साहस्रः यथा क्रतवः २५ इष्टकाभिर्वा द्रव्यसन्निधानात् यथा साहस्रः प्रासाद इति २६ साहस्रे शब्दसंयोगात् २७ सर्वेषु वा समरिहाणात् श्रूयते यथा शतार्धः पुरुष इति २८ सहस्रेष्टकमग्निं चिन्वीतेति लोकंपृणा मन्त्रपरिमाणान्नाना मन्त्राः उभयस्य साहस्राः तदेतस्मात् विप्रतिषिद्धम् २९ सर्वेषां वाऽग्निद्रव्याणां परिमाणविशेषात् तत्र वचनाच्छेषो यथा चतुर्दशभिर्वपतीति ३० इष्टकाविवृद्धौ तद्व्या-ख्यातम् ३१ समशः प्रतिविभज्य पूर्वैः पूर्वाणि कुर्यात् उत्तरैरुत्तराणीति लोकं पृणाया अयातयामश्रुतेः ३२ चितिशब्दः प्रस्तारे यथा लोके ३३ लिङ्गाच्च ३४ पुरीषव्यवायाद्वा चितिपृथक्त्वं कर्मणि विभागात् ३५ गणेषु रीतिवादो यथा लोके प्राच ओदनान्निधेहीति ३६ लिङ्गाच्च

३७ पश्चात्प्राचीमुत्तमामुपदधाति इति त्वेकत्वान्मुखवादः ३८ वाक्य-शेषाच्च ३९ प्राञ्चमिति कर्तुर्मुखवादः शेषत्वात् ४० पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गवादो व्यपदेशात् ४१ चित्यां चित्यां ऋषभमुपदधातीति पशुशब्दः श्रूयते ४२ इष्टका वा मन्त्रवर्णेन द्रव्यसन्निधानात् यथा सृष्टीरुपदधातीति ४३ एतेन मन्त्र-लिङ्गा व्याख्यातव्याः ४४ तद्द्रव्याणि गुणसंयोगाद्यथा पुष्करपर्ण-मुपदधातीति ४५ विकर्णी पञ्चचोडां मण्डलेष्टकामित्याकृतिनियमः शब्दसंयोगात् ४६ न वा चयनार्थत्वात् ४७ मध्यमायामुपसद्यग्निश्चीयेत प्रकृत्युपसंबन्धात् प्राकृते यथा समाम्नानं तत्प्राकृतवैकृतैर्व्याख्यातम् ४८ अनुपसदमग्निश्चीयत इति एकेषामाहत्यविधिः ४९ इष्टकाकर्मणि यथाकाम्यं प्रतीयेत ५० नवा दीक्षितस्योख्यभस्मसंसर्गात् ५१ तन्मासप्रभृतिदीक्षाकल्पेष्विति बादरायणो । मन्यते स्म ५२ प्रति-षेधाच्च ५३ त्रिः पराध्यौऽग्नेराहारः ५४ यथाकामी वाऽन्येषां कर्मणाम् ५५ लिङ्गाच्च ५६ तस्यैतान्येवोर्ध्वप्रमाणान्यनाम्नानात् ५७ तस्येष्टका मन्त्रपरिमाणास्तद्व्याख्यातम् ५८ यदृषीणामाग्नेयमिति याज्ञसेनीः प्रत्युपबन्धात् ५९ वाक्यशेषाच्च ६० दाशतयीभ्यो वा ऋषिसंयोगात् ६१ याज्ञसेनीः स्वस्थानाः प्रवर्धेरन् यथोपसदः ६२ कृत्स्नस्य वा विकारोऽग्निसंयोगात् ६३ दाशतयीभ्यो यावदर्थमागमयेत् यथा गायत्रीषु स्तुवत इति ६४ सर्वेषां तद्व्याख्यातम् ६५ यथाद्रव्यसन्निधि मन्त्रसंयोगात् यथा सामिधेनीविवृद्धौ काष्ठानि ६६ प्रतिसूक्तं वचनात् ६७ यदृषीणामाग्नेयं तेन संवत्सरमग्निं चिन्वीतेति चयनसंयोगात् ६८ गायत्रचितं चिन्वीतेत्येवमादयः कर्मसंयोगास्तद्व्याख्यातम् ६९ शीर्षवानग्निर्वयसां प्रतिमाश्रुतेः ७० मन्त्रवर्णाच्च ७१ लिङ्गाच्च ७२ धर्मिणांते तु समर्हणा यथा प्रतिरूप्यम् ७३ त्रिवृता शिरसि स्तुवत इत्येतेन व्याख्यातम् ७४ सुपर्णो नित्यो मन्त्रवर्णात् ७५ साधारणलिङ्गो वाऽविशेषात् ७६ प्रशंसा मन्त्रवर्णः यथा हिरण्यपक्षश्शकुनो भुरण्युः इति ७७ श्येनचितिर्नित्यकाम्यो यथैन्द्रवायवे ७८ विशेषो वा अमुं पुरुषं लिखेति ७९ लोकं पृणासूददोहाभ्यां प्रतिमन्त्रमुपधानं तद्व्याख्यातम् ८० विनियोगे नानार्थत्वात् समुच्चयः सन्निपातित्वात्

८१ लिङ्गाच्च ८२

इति सङ्कर्षकाण्डे द्वितीयाध्यायस्य प्रथमः पादः

अथ द्वितीयः पादः

हृदयशूलं तस्य वहति तन्नाग्नीषोमीये करोति न सवनीये अनूबन्ध्यायां करोति सोन्ववेत्यविधिः १ सर्वेषां वा श्रपणादुद्वासनाधिकारप्रतिषेधः २ मन्त्रवर्णाच्च ३ स यूपो मन्त्रवर्णात् ४ लिङ्गाच्च ५ बर्हिः समिध इति इध्माग्निः पौर्णमासीति च एतेन व्याख्यातानि प्रकरणात् ६ शब्दसामान्यं वा प्रकरणे कर्माणि तत्प्रकरणे शेषाश्चोद्यन्ते ७ पार्वणेन कालोऽभीज्येत शब्दसंयोगात् ९ कर्माभिज्या वा तुल्यशब्दानां प्रकरणविशेषात् उत्तरस्यां ततौ कर्मप्रयोगो न विद्यते विप्रतिषेधात् १० सोमे दर्शपूर्णमासप्रभृतीनां याजमानं न विद्यते यज्ञो बभूवेत्यर्धोक्ते श्रूयते सा परिसङ्ख्या । यथा आज्यभागौ यजति इति गृहमेधीये ११ स्तुतशस्त्रयोस्त्वनुमन्त्रणार्थमामनन्ति तत्संयोगपृथक्त्वं यथा पञ्चावत्ते १२ चतुरवत्तं जुहोतीति सर्वेज्यानामविशेषात् १३ अदर्विहोमानां वा लिङ्गात् १४ पञ्चावत्तं जमदग्नीनामिति सर्वेषामविशेषात् १५ स्याच्चतुरवत्ते तस्यैव लिङ्गदर्शनात् १६ पञ्चमावत्तमाज्यात् संख्यासंयोगात् १७ औषधाद्वा तत्संप्रदानेनाभिप्रेतम् १८ लिङ्गाच्च १९ अन्ततः क्रमसंयोगात् पञ्चमशब्दश्चाविप्रतिषिद्धः २० पुरस्ताद्वाऽभिघारणात् संस्कारार्थमभिघारणम् संख्यार्थः पञ्चमशब्दः २१ पश्चाधात् तृतीयं पञ्चावत्तिनः क्रमसंयोगात् २२ आवापस्विष्टकृतो द्वितीयं पञ्चावत्तिनः २३ सकृदुपहतेन वनस्पतिं यजतीति संस्कारप्रतिषेधः शब्दसंयोगात् २४ कर्म वा संसर्गार्थनिवृत्तत्वात् २५ यदपरमवदानं तत्पूर्वमिति देशतः कालतो वोभयस्य भागित्वात् २६ कर्मतो वा कर्मलक्षणत्वादवदानस्य २७ पूर्वपूर्वाण्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् यो वा पुरोधाकामः स्यात् अपरपूर्वाण्यवद्येत् कनिष्ठस्य कानिष्ठिनेयस्य इत्येनेन व्याख्यातम् २८ षोडशान्याज्यानि भवन्तीत्येकेषां स विकल्पो विप्रतिषेधात् २९ समस्यवादौ वा यथा चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति

३० सप्तदशानि पशुकामस्य गृह्णीयादित्येतेन व्याख्यातम् ३१ दर्शपूर्णमासयोर्व्यपदेशात् तद्विधानात् ३२ तेषां पृथक्कृतानां निरवदानं यथाऽन्येषां हविः पृथक्त्वात् ३३ वचनात् सर्वेषां सहावदीयेत नहि वचनं किञ्चिद्बुभूषति ३४ तेषां सहप्रदानमवदानैकत्वात् ३५ नाना वा देवतापृथक्त्वात् ३६ अन्यार्थदर्शनाच्च ३७ एककपाले वैश्वानर्यां वपायां वा अवदानसंपत्क्रियेत प्रकृत्युपबन्धात् ३८ प्रतिषेधान्निवर्तते ३९ त्र्यङ्गाणामर्धस्य पृषदाज्यस्य च प्रत्यभिघारणं न विद्यते शेषकार्यतयाऽर्थे श्रूयते ४० विद्यते हविस्संस्कारत्वाद्धेतुमात्रमितरत् यथा दीक्षामोचनं नक्तं संस्थापनस्य ४१ पशोः प्रदानं यथा प्रकृतौ ४२ एककालानि वा लिङ्गदर्शनात् ४३

इति सङ्कर्षकाण्डे द्वितीयाध्यायस्य द्वितीयः पादः

## अथ तृतीयः पादः

यजेतीज्यासम्प्रैषः शब्दसंयोगाद्यथा पचेतिवचनानि येयजामह इति प्रतिश्रवणे यथा अहं तु पक्ष्यामि इति १ लिङ्गाच्च २ प्रजापतिर्यज्ञमन्वेतीत्यत्र देवतानामादेशो न विद्यते अनाम्नानात् ३ विद्यते वाऽन्यार्थदर्शनेभ्यः आश्राव्याह देवान् यजेति अथ इन्द्रायानुब्रूहि इन्द्रं यजेति ४ आम्नातः प्रयाजेषु देवतादेशः तस्य प्रतिषेधो वचनम् ५ वचनानीतराणि स्युः अर्थवत्त्वात् इतरथा वादमात्रं अनर्थकं स्यात् इति ६ आम्नातो वैकेषां तद्दर्शयति अमुष्मा अनुब्रूह्यमुं यजेति ७ देवान्यजेत्यनूयाजेषु साधारणो बहुशब्दः श्रूयते ८ प्रथमस्य वा स्थानात् ९ उत्तमयोश्च प्रैषाम्नानात् १० शब्दविप्रतिषेधान्नेति चेत् पाशवत्स्यात् ११ प्रथमे विप्रतिषेधाद्वा साधारणः १२ क्रमात् पृथक् स्वलिङ्गात् सर्वेषां क्रमाच्च लिङ्गं बलवत्तरम् १३ असन्निपातित्वात् उपरवे सन्निपातित्वम् १४ संस्कारत्वात् द्विर्वचनेऽप्रतिषेधः १५ लिङ्गाच्च १६ एकादश प्रयाजान् यजति एकादशानूयाजान् यजतीति समशः स्वस्थाना विवर्धेरन् क्रमानुग्रहात् यथोपसदः १७ दशमं बर्हिरनूयाजेषु तदुत्तमस्य स्थानात् १८ प्रथमस्य वा देवतासामान्यात्

तदकर्मलिङ्गमितरत् १९ चतुर्थोत्तमयोर्वा स्थानात् २० एककर्मणा सामिधेनीसंयोगं बादरायणः तत्र विशेषो नोपलभ्यते तदुक्तं सामिधेन्य इति २१ पश्वनूयाजेषु मैत्रावरुणः प्रेष्यति स वैशेषिकस्य स्थानात् २२ प्रथमस्य वा शब्दसामान्यादुभयत्र देवताशब्दः श्रूयते २३ उपप्रेष्य होतर्हव्या देवेभ्य इति प्रैषस्य प्रैषो यावदाम्नातं शब्दपूर्वत्वात् २४ अध्रिगुप्रैषो वा तेनापदिश्येत यथा अमृतमसि प्राणायत्वेति हिरण्यमभिव्यनिति इति २५ प्रैषो वा व्यपदेशात् २६ होतारं ब्रूयाच्छब्दसामर्थ्यात् २७ मैत्रावरुणं वा व्यपदेशात् २८ लिङ्गाच्च २८ उक्थशा यज सोमस्येत्यन्येषां स्तुतशस्त्रवतां सोमानामाह अनुब्रूहि प्रेष्येति होतारमाहेत्युभयलिङ्गानां शब्दसंयोगात् २९ शस्त्रवतां च नानार्थानां समासवचनम् यथा उक्थौयाकरणानानयेति शब्दः स्तुवतां आञ्जस्यात् ३० बहुशब्दो गणेषु शब्दसंयोगात् शेषमितरे चतुरवत्तम् ३१ तां पुरोऽध्वर्युर्विभजति मैत्रावरुणः पश्चादिति देशतः कालतो वा उभयस्य भागित्वात् ३२ देशतो वैष वादः स्यात् वषट्कारेणाहवनीयं गच्छतीति गमनसंबन्धात् ३३ ऋतुग्रहणेषु अध्वर्युः समाख्यानात् ३४ ऋतुग्रहे मैत्रावरुणो विभजते ३५ पुनरभ्युन्नीतेषु मैत्रावरुण उच्येत प्रकरणात् तस्माद्धोतृशब्दो यथा यदप्रतिरथं द्वितीयो होतान्वाहेति ३६ होता वाऽग्निष्टोमचमसेषु शब्दसंयोगात् शेषोऽनारभ्यवादः तद्व्याख्यातम् ३७ आश्रुतप्रत्याश्रुते संप्रैषश्चानुवषट्कारे न विद्यते अनुवषट्करोतीति तु विप्रकर्षे नोपपद्यते ३८ विप्रतिषिद्धास्त्वेकेषां नाश्रावयतीति ३९ न नित्यानुवादो वा न्यायसन्निधानात् ४०

इति सङ्कर्षकाण्डे द्वितीयाध्यायस्य तृतीयः पादः

## चतुर्थः पादः

देवतायोगेन प्रदानात्मके चोद्यमाने आहुतिर्यथा लोके १ लिङ्गाच्च २ अदेवतासंयोगेन चौद्यमानेऽर्थगृहीता देवता तत्संयोगे जुहोतिशब्दो यथा भोजनशब्दो मनुष्यसंयोगे ३ सूक्तवाक एव याज्या प्रस्तरप्रहरणमाहुतिरिध्मः प्रथममाहुतीनां हूयत इत्येतेन व्याख्यातम् ४ प्रशंसा वा संस्कारः प्रस्तरस्य सन्निधानात् ७ अज्यानीरेता

उपदधातीत्याग्रयणं निरुप्यैता आहुतीरिति तत्संयोगपृथक्त्वम् ८ चित्रया यजेत पशुकाम इत्युक्त्वा अथैता आहुतीर्जुहोत्येते वै देवता पुष्टिपतयः तयैवास्मिन् पुष्टिं दधाति अग्ने गोभिर्न आगहि इन्दो पुष्ट्या जुषस्व नः इन्द्रो धर्ता गृहेषु नः इत्येतैर्मन्त्रैर्जुहुयात् आनन्तर्यात् पुष्टिशब्दश्चोभयत्र श्रूयते ९ दर्विहोमे सकृद्गृहीतमर्थापत्तेः १० लिङ्गाच्च ११ गणेषु चतुर्गृहीतं समवायाद्यथा ध्रुवायाः १२ प्रत्याहुति वा प्रदानसंयोगात् १३ तत्र समासे वचनं क्रियेत कर्मविभागात् १४ समिदाधानं न विद्यतेऽनाम्नानात् १५ समिधं प्रत्याहुति दर्शयति १६ पाकयज्ञशब्दस्सर्वयज्ञानामविशेषात् यथाऽऽहुतिशब्दः १७ केषांचिद्व्यपदेशात् १८ सर्वदर्विहोमानां स्याल्लिङ्गसंयोगात् १९ सर्वेषामविशेषात् २० लौकिकानां वा तेषां एतन्नामधेयम् २१ लिङ्गाच्च २२ धर्मोपदेशो विप्रतिषेधात् यथावदेतत् २३ प्राचीन-प्रवणे यजेतेत्यधिकरणनिर्देशः स्यात् २४ लिङ्गाच्च २५ पदे जुहोति वर्त्मनि जुहोति वल्मीकवपायां जुहोतीत्येतेन व्याख्यातम् २६ अग्निविकारा वा जुहोतिसंयोगेन चोद्यमाने अर्धशब्देन विधीयन्ते यथा उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति देशशब्देन विधीयन्ते २७ चतुष्पथे जुहोतीत्यनेन व्याख्यातम् २८ प्रशंसा वा अग्निवत्येव जुहोतीति यथा ब्राह्मणवान् ग्राम इति ३० प्रत्यञ्चोऽवभृथेन चरन्तीति प्राङ्मुखाः कर्माणि कुर्युः तद्व्याख्यातम् ३१ तद्व्याख्यातम् ३२ पृथिव्यै स्वाहान्तरिक्षाय स्वाहा इति मन्त्रान्ताम्नातः स्वाहाकारः प्रदानार्थत्वात् तौ ह्यर्थौ श्रुत्या संयुज्येते ३३ पुरस्तादपि मन्त्राः श्रूयमाणाः तदर्थाः प्रदानसंयोगात् यथा देहि ब्राह्मणाय ब्राह्मणाय देहीति ३४ आम्नायाच्च ३५ स्वाहाकृत्य ब्रह्मणा ते जुहोमि स्वाहाकृतमिति प्रयतं जुहोमि स्वाहाकृतमिन्द्राय ते जुहोमि स्वाहाकृतः पुनरप्येति देवान् इत्येतेन व्याख्यातम् ३६ अप्रदानार्था वा स्तुत्यर्थः श्रूयते ३७ वषट्ते विष्णवास आकृणोमीत्येतेन व्याख्यातम् ३८ स्विष्टकृद्विकारे या-ज्यायां देवतानिगमाः स्युः प्रकृत्युपबन्धात् ३९ उपलक्षणप्रधाना-स्तूपलक्षिताः पुनः प्रैषे ४० स्वाहेत्यालेखनः प्रदानकर्मा चतुर्थी-विभक्तेः ४१ यथासमाम्नानमित्याश्मरथ्यः प्रवचनलक्षणत्वान्मन्त्राणाम्

४२ चित्ताय स्वाहा चित्त्यै स्वाहेत्येकेषां विकल्पो विप्रतिषेधात् ४३ भूतानामवेष्टिभिरिष्टका उपदध्यात् अर्थवादसामान्यात् ४४ अग्नौ वा येऽब्राह्मणा मन्त्रास्तद्व्याख्यातम् ४५ नानार्थयोरर्थवादसामान्यं यथा क्रतुषु पृथक्त्वम् ४६ एतेन तुल्यशब्दत्वं व्याख्यातम् ४७ मन्त्रागमे सस्वाहाकारः प्रतीयेत वाक्यसंयोगात् ४८ अस्वाहाकारा वा प्रदानार्थस्वाहाकारेभ्यः ४९ स्थितं तावदपर्यवसितम् । प्रप्रैषेण यजतीत्येतेन व्याख्यातम् ५० स्थितादुत्तरम् । स्याद्वा इष्टकासु स्वाहाकारो यथा मुष्टिकरणे ५१ ऋताषाड्तधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात् यथा सूक्तवाकानाम् ५२ यथासमाम्नानं वा व्याख्यातम् ५३ षड्जुहोतीति पर्यायवादो यथा सावित्राणि जुहोतीति ५४ भुवनस्य पत इति सप्तमीमाहुतिं जुहोतीति ५५ भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोतीति दशेत्येकेषां दर्शनात् पञ्चस्ववयुत्यवादो यथा षड्भिरुपतिष्ठते इति ५६ स्वाहाकारवषट्कारनमस्काराः प्रदानार्था यथान्यत्र ५७ अप्रदानार्था वाक्यसंयोगात् यथा मुष्टिकरणे स्वाहाकारः स्वाहाकारः ५८

इति सङ्कर्षकाण्डे चतुर्थः पादः अध्यायश्च परिसमाप्तः

## अथ तृतीयाध्यायस्य प्रथमः पादः

विक्रमसन्निपातौ दर्शपूर्णमासयोः इज्याकालस्तत्संयोगात् १ द्वाविज्याकालौ वचनात् २ रात्रौ यज्ञे शब्दसंयोगात् ३ अहनि वा तद्व्याख्यातम् ४ प्रक्रमाभिधानाद्रात्रिशब्दो यथाऽन्यत्राहोरात्रसम्मितः पञ्चाहेनागतः इति ५ लिङ्गाच्च । उदिते सूर्ये तन्त्रप्रक्रमः प्रधानसंयोगात् ६ यजनीये वा तद्व्याख्यातम् ७ एतेन सोमकालो व्याख्यातः ८ विक्रमसन्निपातयोर्वा स्यात् तत्संयोगात् न ह्यन्यत् प्रत्यक्षं विद्यते ९ यदि मन्येत त्वपूर्णामिति नान्यद्धविरन्तरं निर्वपेत् पौर्णमासीमेव यजेत श्वोभूत इति सर्वेष्टीनामविशेषात् १० दोषसंयुक्तानां वा कल्पत्वात् ११ न यवानां आग्रयणं विद्यत इत्यौडुलोमिः तासामितरेणेत्येकवच्छ्रूयते १२ उभाभ्यामाग्रयणेनेति प्रत्यक्षश्रुतेः १३ सर्वेषां प्राशन्यो यथा भक्षाणामविशेषात् १४ मन्त्रवतां वा १५ अनिष्टाग्रयनस्य नवाशन-

प्रतिषेधः आरण्यफालकृष्टानां वाक्यसंबन्धात् ग्राम्याणां न स्यात् १६ वाक्यसंयोगाच्च १७ ग्राम्यारण्यव्यपदेशो वा फालकृष्टाभिराख्यातं लभेदन्यथा सर्वग्राम्याणां पृथग्व्यपदेशः स्यात् प्रत्यक्षत्वादारण्याभिधानस्य १८ शाकपक्वौषधीनां प्राशने यथाकामी स्यात् १९ लिङ्गाच्च २० तेन शमीधान्यं व्याख्यातम् २१ प्राशितेऽग्नीनादधानो न कृतप्रसवत्वात् २२ अविद्यमानोऽभोक्ष्यमाणश्चाधिकृतौ सस्यसंयोगात् २३ अत्राग्रयणाभ्यासः प्रकरणात् २४ दर्शपूर्णमासयोरन्तरालसंयोगान्न ह्यन्यदन्य क्रमं विद्यते २५ स विकल्पः स्यात् व्रीहियवयोर्यथाग्निहोत्रे २६ स षण्मासादध्यधिभवेत् २७ लिङ्गदर्शनाच्च २८ सस्यपक्तेर्वाऽविप्रतिषेधात् २९ पार्वणमासानि विज्ञायन्ते ३० त्रिंशद्वै सावनस्य विप्रतिषेधात् पार्वणस्य यथा यद्येतान्नालभेत इति ३१ मासो वा ३२ द्वौ पराविष्ट्वा तृतीयमुत्सृजेदिति अनन्तरं यथा पुरस्तात् ३३ आदेर्वा कर्मणोऽपवर्गात् ३४ विज्ञयते च स त्रिषु त्रिषु संवत्सरेषु मासमुत्सृजेदिति । तेन मन्यामहे एतद्वचनमभ्यासो विप्रतिषेधात् यथा दाक्षायणयज्ञे ३५ पञ्चसु चातुर्मास्येषु वैश्वानरपार्जन्ये पञ्चहोता च नापद्यन्ते एकोपक्रमत्वात् यथा आरम्भणीया ३६ यदि वसन्ता यजेत द्विरुपस्तृणीयात् द्विरभिघारयेत् ओषधयो वै शब्द ओषधीष्वेव पशून् प्रतिष्ठापयति यदि प्रावृषि यजेत सकृदुपस्तृणीयात् द्विरभिघारयेत् द्विष्या पशून् अभिजिघन्तीति वैश्वदेवस्य प्रकरणात् ३७ वरुणप्रघासानां लिङ्गसंयोगात् यथा विप्रतिपन्नेषु ३८ वैश्वदेवेन पशुकामो यजेत यस्मिन् ऋतौ प्रभूतं गोषु पयः स्यादिति सर्वमविशेषात् ३९ वसन्तानां वा तस्य कालत्वाद्वैश्वदेवस्य यथा यस्मिन् ऋतौ बहुव्रीहिः स्यात् तस्मिन् यष्टव्यमिति वसन्त एव यजेत ४० वैश्वदेवस्य कालाभ्यासः प्रतिषेधे न विधीयते ४१ वैश्वदेवस्याभ्यासः विहितस्य स्थाने कालोत्कर्षः ४२ मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यामिति स्वकालः स्यात् प्रकृत्युपबन्धात् ४३ अहरहर्वा चोदितत्वात् यथा त्रिवृता मासं ततः अहरहः सकृदग्निहोत्रं हूयेत ४४

इति सङ्कर्षकाण्डे तृतीयस्य अध्यायस्य प्रथमः पादः

कालपादः समाप्तः

## द्वितीयः पादः

तत्सर्वार्थमविशेषात् १ गार्हपत्यार्थं ब्राह्मौदनिकं स्यात् गार्हपत्येन संवत्सरमासीतेति तत्संयोगात् २ लोकत इतरे यथान्यानि द्रव्याणि ३ गार्हपत्याद्वा आहवनीयो लिङ्गात् ४ आहवनीयात् सभ्यावसथ्यौ ५ पृथक्प्रकल्प्येतां वा शब्दपृथक्त्वात् यथा ऋत्विजः ६ आम्नातं दक्षिणाग्नेः ७ निर्मन्थ्यात् दक्षिणाग्निमादधीत इत्येकेषां दर्शनम् ८ व्याख्यातं धारणम् ९ अनुगच्छेद्वाऽऽहवनीयो लिङ्गात् १० प्रत्यर्थमाधानमिति ११ तुल्यश्रुतित्वाद्वा इतरैराहितस्य धारणयोगात् वचनाद्यथा समारोप्य १२ दक्षिणाग्नेरेतेन व्याख्यातम् १३ पूर्वं गार्हपत्यादाहवनीये उद्धृते पुनरनुगते तत वोद्धियेत तद्गतत्वात् १४ लिङ्गाच्च १५ अहोमार्थेष्वाहवनीयः श्रूयमाणोऽनवेतः शब्दनित्यत्वात् १६ अपवृत्ते कर्मणि धार्यमाणो लौकिकोऽर्थसंयोगात् यथा समारूढे १७ लिङ्गदर्शनाच्च १८ एतेन सोमो व्याख्यातः १९ दीक्षणीयाग्निर्धार्येत संस्कारयोगात् देवतापरिग्रहणं श्रूयते २० लिङ्गदर्शनाच्च २१ तदुत्तरवेद्यां कृत्स्नं प्रणयेद्धोमसंयोगात् स आहवनीयः २२ शेषं वा कुर्याल्लिङ्गात् २३ आहवनीयविभागस्स पुरस्तादुद्ध्रियते २४ गार्हपत्यो वा शेषो लिङ्गात् २५ आहवनीयविभागः स पुरस्तादुद्ध्रियते । गार्हपत्य एव तच्छ्रूयते । सर्वेषां गार्हपत्यानामविशेषात् २७ श्रुतिभूतानां दार्शिकप्रकृतेश्चाधिकारात् २८ लिङ्गदर्शनाच्च २९ आहवनीयात् विहरेद्धोमसंयोगात् ३० शालामुखीयाद्वा देशसंयोगात् ३१ आहवनीयात् धिष्णियान् विहरेद्धोमसंयोगात् ३२ आग्नीध्रीयाद्वा आम्नायतः ३३ अनुसवनं सवनसंयोगात् ३४ चतुर्थं वा अग्निष्टोमसामलिङ्गात् ३५ अनुसवनं व्याघारणमविशेषात् प्रत्यङ्ङासीनो धिष्णियान् व्याघारयतीति ३६ तृतीयसवने चाविशेषलिङ्गात् ३७ विप्रतिषिद्धो वा एकवाक्ययोगात् कालहविषोरिति बादरायणः ३८ तस्मात्तेषु जुह्वतीत्यर्थः ३९ तेषां वायव्यं पात्रं चमसो वा प्रकरणात् यथा शूर्पेण जुहोतीति ४० सोमे होमेष्वाज्यं हविश्चोदनापृथक्त्वात् ४१ लिङ्गाच्च ४२ स वैव स्यादित्याहवनीयस्यायं वादः ४३ प्राजहितस्य वाऽपदेशात् अर्थवादप्रतिषेधाच्च ४४ पशौ शालामुखीयः स तदर्थः प्रकृतौ न सोमे

गार्हपत्यकर्म विद्यते ४५ पश्विष्ट्यामाहवनीयो धार्येत संस्कारसं-योगात् स दीक्षणीयया व्याख्यातः ४६ पूर्वेद्युः काले पशावुत्तर-वेदिकेऽग्निहोत्रं जुहुयादाहवनीयत्वात् ४७ अग्निहोत्रस्य शालामुखीये श्रपणं प्रसङ्गात् ४८ प्राजहिते विद्यमानत्वात् ४९ शामित्रे पशुपुरो-डाशस्य श्रपणं प्रसङ्गात् ५० शालामुखीये प्रयुक्तत्वादद्रव्यस्य प्रयुक्ते प्रसङ्गात् ५१ द्व्यहे त्र्यहे उत्तरवेदिः क्रियेत प्रकृत्युपबन्धात् ५२ स्वकालत्वात् सद्यस्काल एव पशुः वरुणप्रघासश्चोत्तरवे-द्यामग्निहोत्रं सञ्चष्टे ५३ पशुवरुणप्रघासेषु दर्शपूर्णमासविकारत्वा-च्छालामुखीयो न स्यात् ५४ विद्यते तद्व्याख्यातम् ५५ संस्थिते सोमे शालामुखीयाग्नीध्रीयोत्तरवेदिकाः समारोप्य नित्यं धार्यन्ते ५६ अनुगतेषु प्रायश्चित्तमाम्नातम् ५७ प्राजहितं वा सर्वार्थत्वात् आधानस्य सोमलक्षणं इतरेषां तत्सोमापवर्गेऽपवृज्येरन् यथाऽग्निहोत्रादुद्धरणम् ५८ गतश्रियश्शालामुखीयं नित्यत्वात् ५९ दीक्षिताग्नेः समारोपणं न विद्यते अग्निहोत्रानन्तर्यात् तत्पुनः प्रतिषिद्धं तस्य ६० विद्यते चाप्रयाणसंयोगात् ६१ प्रत्यग्न्यरणि भेदो द्रव्यपृथक्त्वात् ६२ लिङ्गाच्च ६३ अरणिभ्यामित्येकेषां स विकल्पो विप्रतिषेधात् ६४ इतरस्य वा धर्मविधित्सा यथा रथाङ्गेन तरन्तीति ६५ उख्याग्नेर्न समारोपणं पात्रसंयोगात् ६६ अपरयोस्तु विद्यते विप्रतिषेधात् ६७ आत्मसमारोपणे अरण्योश्च विकल्पो विप्रतिषेधात् ६८ एकार्थत्वात् समुच्चयः विप्रतिषेधाद्विकल्प इति ६९ आत्मसमारूढे विप्रतिषेधात् ७० एकार्थत्वाद्वा नियम्येत श्रुतेरविशिष्टत्वात् ७१

इति सङ्कर्षकाण्डे तृतीयाध्यायस्य द्वितीयः पादः

अग्निपादस्समाप्तः

## अथ तृतीयाध्यायस्य
## तृतीयः पादः

अतिग्राह्यास्समानविधानास्तद्व्याख्यातम् १ विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे इत्यपि विश्वजितो वादेन विश्वजित्त्वेन व्यपदि-श्यते २ स प्रकृतिगःप्रकरणात् संबन्धेऽनारभ्यविधिः ३ विकल्पो

वा पृष्ठ्यशब्देन विधीयते ४ द्व्याश्रयविकल्पः स्यात् ५ समाने वा कालेऽविच्यावनशब्दोऽविप्रतिषिद्धः ६ वैराजस्य स्तोत्रायाग्नेयो गृह्यत इति देवताविकारश्चतुर्थीसंयोगात् ७ अङ्गविधिर्वा यथा क्वास्य रथस्य पुरुष इति ८ कालवादो यथा प्रातस्सवनेऽतिग्राह्या गृह्यन्त इति ९ प्रातस्सवने गृह्यन्त इति कालवादान्तरं ग्रहणोक्ता गृह्यन्त इत्येकेषाम् १० देवतानानात्वात् न ह्यन्यदेवत्यानां याज्यानां देवतापृथक्त्वात् ११ समानयाज्या वाऽनुहूयन्त इत्यर्थसमवायेनोपपद्यते १२ दधिग्रहो नित्यस्तद्व्याख्यातम् १३ आदितो गृह्येत क्रमसंयोगात् १४ ज्येष्ठ-शब्दाच्च १५ न वा मन्त्रक्रमबलीयस्त्वात् ज्येष्ठशब्दो यथा ज्येष्ठमेव गच्छतीति १६ लिङ्गाच्च १७ उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति ग्रहणे लिङ्गत्वं मन्त्रे ग्रहणलिङ्गात् १८ अपेन्द्रद्विषतो मनोपजिज्यासतो जहि इत्ययमपि तत् १९ प्राणाय त्वा-ऽपानाय त्वा व्यानाय त्वेति होमलिङ्गात् २० कामसंयोगस्तद्व्याख्यातम् २१ नित्ये कामो यथा ऐन्द्रवायवे २२ सोमग्रहो दधिकृतस्सोमधर्मै नैमित्तिकत्वात् २३ दधिग्रहविकारत्वाच्च २४ तत्रार्थग्रहणोऽभिषवः पात्रसंयोगात् २५ तिस्रो बह्वस्य समिध इत्येतया सोमं करोतीति प्रत्यक्षस्य सतः सोमस्य क्रिया नोपपद्यते २६ कर्मसंयागाद्वा करणीयं यथा हिरण्यकारः २७ अंश्वदाभ्यवाक्यं चोर्ध्वमवृभृथात् विद्यते क्रियेत चोर्ध्वमवभृथात् अथवौपानुवाक्ये तस्येतरश्शेषोऽखिलविधानात् पशुशिरसां त्रिंशद्वाक्ये तद्व्याख्यातम् २८ लिङ्गाच्च २९ भ्रातृव्यवता-ऽदाभ्यो ग्राह्यो बुभूषतांऽशुरिति कामसंयोगस्तद्व्याख्यातम् ३० नाना-र्थानां समासवचनं यथा स्तुतशस्त्रवतां सोमानामाहेति ३१ अपदेशो वा ग्रहाणामाम्नातत्वात् ३२ अपदेशो वा तुल्यत्वाच्चमसस्यापवादः ३३ न गुणत्वात् ३४ आम्नायते खलु सर्वत्राविशेषात् ३५ विकल्पो वा व्यपदेशात् स्तोत्रमुपाकुर्यादिति ३६ नानार्थानां समासवचनं यथा स्तुतशस्त्रवतां सोमानाहेति ३७ पृश्निग्रहाः प्राणग्रहास्तद्व्याख्यातम् ३८ प्राणभृद्भिर्गृह्येरन् लिङ्गसंयोगात् ३९ सङ्ख्यायोगाच्च दश गृह्यन्त इति ४० पृश्निप्राणग्रहान्व्यतिषजति इति ग्रहेषु नोपपद्यते ४१ ग्रहा एते मानस्थाने वा ग्रहव्यतिषङ्गात् ४२ व्यपदेशात् ४३ ग्रहशब्दाच्च

४४ स्थानान्मानकाले वचनात् ४५ प्रायणीये चोदयनीये च गृह्यन्त इति तदहीनेन व्याख्यातम् ४६

इति सङ्कर्षकाण्डे तृतीयाध्यायस्य तृतीयः पादः

अयं ग्रहपाद इत्युच्यते

## तृतीयाध्यायस्य
## चतुर्थः पादः

आर्षेयं वृणीते इत्यृत्विजामभिजनाचिख्यासा यथा भार्गवो होतेति १ यजमानस्य वा बन्ध्वनुकीर्तनं वाक्यशेषात् २ भृगुर्वसिष्ठेति ब्रूयादेवं सोऽनुकीर्तितो भवति ३ भार्गववासिष्ठेति वा अस्य हि तेन लिलक्षयिषैषाम् ४ त्रीन्वृणीते मन्त्रकृतो वृणीते इति मन्त्रकृतां परिमाणाचिख्यासा यथा भार्गवांस्त्रीनानयेति ५ यथर्षि वरणं सन्तानानुकीर्तनमिति समधिगतम् ६ मनुवदित्येव ब्रूयादिति वैश्यराजन्यानां यथा शेषे चतुरवत्तम् ७ आर्षेयं प्रतिषिध्य विधीयते तस्मात्तेन विकल्पार्थः ८ पुरोहितस्य प्रवरेण वृणीते पुरोहितस्यार्षेयेण वेदयेदिति विज्ञायते ९ निषादरथकाराश्च यमृषिमनुब्रुवते तेन तेषां वृणीत १० तथा ब्राह्मणानां राजोपेतानां राज्ञां च ब्राह्मणोपेतानाम् ११ द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादुपलक्षयेत् सन्तत्याचिख्यासा १२ वषट्कर्तॄणां वा ज्ञायते १३ होतृमैत्रावरुणौ दार्शपूर्णमासिक्या दर्शपूर्णमासप्रकृतीनां कृते न सोमस्य धर्मः पशूनामस्ति तृतीयसवने कृष्णविषाणया कण्डूयनेन व्याख्यातम् १४ लौकिक्या चैकवाक्यत्वाद्यथेतरेषाम् १५ प्रैषेण यजन्त्यनुप्रैषादिभिः प्रथत इत्येकेषां सोऽन्ववेत्य विधिः १६ सप्त वृणीत इति वरणानां सङ्ख्यायोगात् १७ पुरुषवादः स्यात्तेषामपि प्रकृतत्वात् १८ निरूढपशुबन्धार्थं तदहीनेन व्याख्यातम् १९ श्वोभूते व्रियेरन् तदर्थत्वात् यथान्यानि यज्ञाङ्गानि २० यथा समाम्नानाद्व्याख्यातम् २१ विप्रतिषेधो यज्ञाङ्गेष्वविप्रतिषिद्धं वरणम् २२

इति सङ्कर्षकाण्डे तृतीयाध्यायस्य चतुर्थः पादः

आर्षेयपादः

अथ षोडशाध्याये

चतुर्थाध्याये प्रथमः पादः

हिंकृत्य सामिधेनीरन्वाह सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्तात् १ तारमन्द्रौ अपोह्य मध्यमस्वरो विधीयते २ अन्तर्वेद्येकः पादो भवति बहिर्वेद्यन्य इति संस्थानविशेषो वाक्यैकवाक्यत्वात् ३ पञ्चदश सामिधेनीरन्वाहेति चतस्र आगमयेत् एकादश प्रकरणे श्रूयन्ते ४ लिङ्गदर्शनाच्च ५ अभ्यासेन सङ्ख्या पूर्यैत प्रकरणात् यथाऽऽज्येषु सङ्ख्यापूरणम् आम्नानात् ६ सन्ततमुत्तरमर्धर्चमालमेतेत्युत्तमेनानुवच-नेन आनन्तर्यात् सन्तानम् ७ सर्वैर्वाऽविशेषात् ८ यं कामयेत सर्वमायुरियादिति आजुहोत दुवस्यतेति त्रिनवानमनूच्य सहोपक्रमेत् इत्येतेन व्याख्यातम् ९ सन्ततमन्वाहेति सामिधेनीनामविशेषात् १० वाक्याद्वा प्रथमोत्तमयोरेवायं धर्मो भवेत् ११ अवाच्यत्वान्नेति चेत्स्यात् संयोगपृथक्त्वात् १२ पूर्वेण कृतत्वाद्वा सर्वासाम् १३ सामिधेनीसन्तानस्तल्लक्षणत्वात् १४ अन्तेऽपीति चेत्स्याद्वचनात् १५ प्रकरणात्समिधेनीनां प्रथमोत्तमयोर्वादो विज्ञायते १६ सामतो वा एष तृचस्य प्रथमोत्तमयोर्वादो विज्ञायते १७ त्रिर्विगृह्णातीति सामिधेनीनामविशेषात् १८ सामन्वतो वास्य मध्यमायाः वादो भवेत् तस्याः स्थाने स्थापयतीति १९ समिद्वती घृतवती चानूच्येते इत्यृचावागमयेत् । तल्लिङ्गत्वाच्छब्दस्य २० पदवादो वा प्रकरणात् २२ ऋचि प्रणवं दधातीत्यधिकः स्याद्यथा विप्रतिषेधात् २२ लिङ्गाच्च २३ सामिधेन्यक्षरं वा विकुर्यादेतत्तस्यां निहितो भवति २४ पर्यायं वा यथा द्वे वस्त्रयुगे धारयतीति २५ अन्ते वा स्यादाम्नातायां हि श्रूयते २६ लिङ्गाच्च २७ ओङ्कारः प्रणवः स्यात् २८

इति सङ्कर्षकाण्डे चतुर्थाध्यायस्य

प्रथमः पादः

हौत्रकाध्याये सामिधेनीपादः

अथ चतुर्थाध्याये द्वितीयः पादः

त्रींस्तृचाननुब्रूयाद्राजन्यस्येति स्वच्छन्दो वर्जयित्वा वर्णच्छन्दांस्यनु-

ब्रूयादित्यालेखनः वर्णानामवरुध्य उच्यते छन्दोनुवचनात् १ प्रकृतित इत्याश्मरथ्यः नादेये प्रकृतितः प्रतीयते २ सर्वाणि च्छन्दांस्यनुब्रूयाद्बहुयाजिनः इत्यविशेषवादः शब्दसंयोगात् ३ अपि वा गायत्री त्रिष्टुप् जगती च प्रकरणात् ४ अभीक्ष्णयाजी स्यात् तेन हि स्विष्टं भवति बहुशो यो यागमनुतिष्ठत इति ५ बहुदक्षिणो वा तेनाख्यां लभेत यथा सहस्रयाजी पुरुष इति ६ सोमयाजी वा लिङ्गात् ७ सोमयाजीत्येकेषां सोऽन्ववेत्य विधिः ८ निविदां सन्ततवचनं यथा सामिधेनीनाम् ९ अनाम्नानाद्वा नोपपद्यते प्रत्यक्षाम्नानात्सामिधेनीनाम् १० आसीनमूर्ध्वज्ञुं होतारं वृणीत इति विज्ञायते ११ वरणार्थं वा-ऽऽसनं तत्संयोगात् १२ अध्वर्युप्रवरमेके समामनन्ति १३ अध्वर्युं प्रवरः पूर्वः स्यात् ब्रह्मण्वदाचवक्षत् इति आवाहनं देवतासु नोपपद्यते १४ यथासमाम्नानं वा तद्व्याख्यातम् १५ आवह देवान् यजमानायेति सर्वदेवतानामविशेषात् १६ प्रयाजानामेव स्थानानि १७ प्रत्यक्षेण श्रावयति अग्निमग्न आवह सोममावहेति तद्यथा ब्राह्मणानुक्त्वा मुञ्च मुञ्चेति १८ आहवनीय आवोढा सामिधेनीभिरिष्ट्वा निविद्भिरुपस्तुत्य अग्निमग्न आवहेति श्रावयति तस्मादाहवनीयस्यानन्तर्यात् १९ अग्निं होत्रायावहेति तस्मिन्नेवैतदाहुतयो हूयन्ते तदावाहयति तदग्निं स्विष्टकृतमित्याहवनीयः स्यादाहुतिसंयोगात् २० अन्यो वा व्यपदेशात् २१ स गार्हपत्यः तस्मिन्नप्याहुतयो हूयन्ते २२ लिङ्गाच्च २३ स होमायोह्येताहुतिसंयोगात् २४ होतृकर्मणे वा तल्लिङ्गत्वाच्छब्दस्य २५ होतारो यष्टारो जातवेदाश्च होतृयष्टृजातवेदशब्द उभयस्याभिधाता यष्टुरग्नेः स्वरूपस्य स्वस्य च महिम्नः २६ अतूर्तो होता आचाग्ने देवान् वह सुयजा च यज जातवेद इति आहवनीयस्य वाक्यसंयोगात् २७ स्वाहाग्निं होत्राज्जुषाण इत्युत्तमप्रयाजे तं गार्हपत्यस्य स्थानादिज्यासंयोगाच्च २८ अग्निं होत्रेणेदं हविरजुषतेति सूक्तवाके तदेतेन व्याख्यातम् २९ अयाडग्निरग्नेः प्रियाधामानीत्याहवनीयस्य यक्षदग्नेर्होतुः प्रिया धामानीत्येतेन व्यपदिश्यते ३० सुयजा यज इति कृणोतु सो अध्वरा जातवेदाः जुषतां हविः इति गार्हपत्यस्य हविस्संयोगात् ३१ अग्निर्देवो दैव्यो होता देवान् यक्षत् इत्याहवनीयस्य लिङ्गात् ३२ अग्निर्होता

वेत्त्वग्निः होत्रं वेत्तु प्रावित्रं इति स्रुगादापने ३३

इति सङ्कर्षणकाण्डे चतुर्थाध्यायस्य द्वितीयः पादः

हौत्राध्याये निगदपादः

## अथ चतुर्थाध्यायस्य तृतीयः पादः

इमे वयं स्मो वयमित्येके समामनन्ति १ वषडित्येके वौषडित्येके वाक्षाडित्येके वौक्षाडित्येके वषडिति ब्राह्मणस्य वषट्कुर्यात् वौषडिति राजन्यस्य वौक्षाडिति वैश्यस्य षडिति शूद्रस्य विज्ञायते २ सन्ततमृचा वषट्करोतीति विज्ञायते ३ समानवदृचा वषट्करोतीति विज्ञायते ४ याज्याया अधि वषट्करोति इति विज्ञायते ५ अवगूर्य वषट्करोतीत्युच्चैर्वादः शब्दसंयोगात् ६ यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यात् उच्चैः क्रौञ्चमिव वषट्कुर्यात् स्वर्गकामस्येति वषट्कारो विज्ञायते ७ यं कामयेत पशुमान् स्यात् इति बहुपर्णां तस्मै शालां कुर्यात् इति क्रौञ्चमिवेत्युच्चतरं स्वर्गकामस्य इति च अङ्गकामस्तद्व्याख्यातम् ८ यस्यै देवतायै वषट्कुर्यात् तां ध्यायेदिति पुरा वषट्कारादिति विज्ञायते ९ वषट्कृत्यापान्यान्निमिषेदपानेनैव प्राणं दधाति निमेषेण चक्षुरिति विज्ञायते १० न व्यपवदेद्याज्यां चानूवाक्यां चान्तरा यद्व्यपवदेत् यज्ञं विच्छिन्द्यात् पुरोनूच्यं यज्ञस्य सन्तत्या इति विज्ञायते ११ स्वाहा देवा आज्यया जुषाणा इति तत् प्रयाजानूयाजानां यथा आवाहने देवानाज्यपानिति १२ अनूयाजानां विज्ञायते १३ सहोत्तमेन प्रयाजेन सोप्यनिष्टो भवति तस्मिन्नितरासां संस्थावदिति १४ जुषाणयाज्यावेके समामनन्ति ऋग्याज्यावेके सहविषावेके अहविषावेके हविष्मत्युत्तरमाहेति १५ गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या त्रिपदा पुरोऽनुवाक्या भवति चतुष्पदा याज्या पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति उपरिष्टाल्लक्ष्मा याज्या मूर्धन्वती पुरोनुवाक्या भवति नियुत्वती याज्या अनुवती पुरोनुवाक्या भवति याज्या साहत्वै पुरोनुवाक्या समृद्धा याज्या अभीष्टाहरद्देवता वेत्यग्रे व्याहरति सा ह वै समृद्धा यस्यै देवतायै अधि वषट्करोति आहोस्वित्सुरभिमतीसंयोगात् याज्यानूवाक्या दर्शितेति विदितं अनुवादास्तद्व्याख्यातम् १६ गायत्र्यौ

संयाज्ये ब्रह्मवर्चसकामस्य त्रिष्टुभौ वीर्यकामस्य जगत्यः पशुकामस्य अनुष्टुभौ प्रतिष्ठाकामस्य पङ्क्त्यो यज्ञकामस्य विराजावन्नकामस्य १७ अयाड्देवानामाज्ययानां प्रिया धामानीति तत्प्रयाजान्याजानां यथा पुरस्तात् १८ अनवानं यजतीत्युत्तमानुयाजे विज्ञायते तद्वदेव सकृदेवावान्यात् एवमप्यनवानं इति विज्ञायते १९ उपांशु यजती-त्यन्यत्राश्रुतप्रत्याश्रुतेभ्यः तच्च व्याख्यातम् २० उपांशु पत्नीः संयाज-यतीत्यनेन व्याख्यातम् २१ आज्येडा सर्वेज्यानामङ्गमविशेषात् २२ पत्नीसंयाजाङ्गं हविस्संयोगात् २३ पराचीं प्रतीचीमिति कर्तुर्मुखवादः तल्लिङ्गत्वाच्छब्दस्य २४ लिङ्गाच्च २५ आम्नातो वाऽत्र पदाभ्यासः तस्य प्रतिषेधोऽयं पराचीस्सामिधेनीरन्वाहेति २६ चतुरुपह्वयत इति निगदोऽभ्यावर्तेत तल्लिङ्गत्वाच्छब्दस्य २७ पदं वा प्रकरणाद्यथा चैते समिद्वती घृतवती चानूच्येते २८ यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुवेवासुरं यज्ञस्याशिषं गमयेत् इदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयात् एतदेवैकेषाम् विपरीतम् । यद्ब्रूयात् सूयावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात् यदा हि प्रमीयते अथेमामुपावत्स्यति सूपचरणा च स्वधिचरणाचेत्येव ब्रूयात् यजमानमेव यज्ञस्याशिषं गमयति इत्येतदेवैकेषां विपरीतं यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेत् वृधात्वित्याह यज्ञस्थाणुमेव परिवृणक्ति इत्येतदेव विपरीतमेकेषाम् । यद्ब्रूयाद्योऽग्निं होतारमवृथा इति अग्निनोभयतो यजमानं परिगृह्णीयात् एतदेवैकेषां विपरीतं यद्द्वे इव ब्रूयात् भ्रातृव्यमस्मै जनयेत् घृतवतीमध्वर्यो स्रुचमास्यस्वेत्याह यजमानमेवैतेन वर्धयति इत्येतदेवैकेषां विपरीतम् त एवमुभये प्रशस्ताश्चापोदिताश्च २९ यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेत् आशास्तेयं यजमानोसावित्याह निर्दिश्यैवैनं स्वर्गं लोकं गमयतीति विज्ञायते ३० नाम गृह्णातीति विज्ञायते नामानि गृह्णातीति विज्ञायते ३१ द्वयोर्बहूनां च नाम्नां विधानात् नाम गृह्णातीत्यवयुत्यवादः स्तावकत्वात् ३२

इति सङ्कर्षकाण्डे चतुर्थाध्यायस्य तृतीयः पादः

हौत्रकाध्याये वषट्कारपादः

## अथ चतुर्थाध्यायस्य चतुर्थः पादः

एते वै प्रजापतेः कामदुहः षट्सूनाः पृथुपाजवत्यौ धाय्ये ऽनुपदावाज्यभागौ आनुष्टुभौ संयाज्ये इति १ कामेष्टिस्तत्रानुपदौ स्यातां तदर्थत्वात् २ वामदेव्यस्य पञ्चदशर्चः सामिधेन्यः स्युः याज्यानूवाक्याश्चेति सर्वास्सामिधेन्यः स्युः तदर्थत्वात् ३ यथार्थमितरत्र विरोधात् ४ अगस्त्यस्य कयाशुभीयसामिधेन्यो याज्यानूवाक्याश्चेत्यनेन व्याख्यातम् ५ य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदित्येवमुक्त्वा व्यत्यासमन्वाह इन्द्राय राथन्तरायानुब्रूहीति रथन्थरस्य ऋचमनूच्य बृहत ऋचा यजेत् इन्द्राय बार्हतायानुब्रूहीति बृहत ऋचमनूच्य रथन्तरस्य ऋचा यजेत् इन्द्राय वैराजयानुब्रूहीति वैराजस्यर्चमनूच्य वैरूपस्यर्चा यजेत् इन्द्राय शाक्वरायानुब्रूहीति शक्वरीमनूच्य रैवत्या यजेत् इन्द्राय रैवतायानुब्रूहीति रैवतमनूच्य शक्वर्या यजेत् देवताभिर्व्यतिषजति व्यत्यासमन्वाहेति । सामान्येन विहिते पुरोडाशे इन्द्राय राथन्तरायानुब्रूहीति रथन्तरस्य ऋचमनूच्य बृहत ऋच यजेदित्युक्तम् । न बृहत्या वषट्कुर्यात् यदनुबृहत्या वषट्कुर्यात् छन्दांसि गमयेत् अनूवाक्ययोश्चत्वार्यक्षराणि याज्यामनूच्य यजति आनुष्टुभं च हवा एतत्संपादयति ६ अभि त्वाशूर नोनुमोऽदुग्धा इव धेनवः ईशानमस्य जगतः स्वर्दृशं ईशानमोमित्यनूच्य इन्द्र तस्थुपस्त्वामिद्धि हवामहे इति यजेत् । त्वमिद्धि हवामहे सातावाजस्य कारवः त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठामित्यनूच्य स्वर्वतोऽभित्वा शूर नोनुमोमिति यजेत् । एवमेतद्यथासमाम्नातस्याक्षरक्रमाद्यविरोधेनाक्षरक्रमाणामध्यूहनम् ७ द्वे याज्ये स्यातां तदर्थत्वात् ८ लिङ्गाच्च ९ उभे सप्रणवे स्यातां प्रकृत्युपबन्धात् १० गृहमेधीये देवतावाहनं न विद्यते सामिधेन्यानन्तर्यात् तत्पुनः प्रतिषिध्यते ११ विद्यते वाऽनन्तर्यात् अकारमानन्तर्यं यथा वास्तोष्पतीये १२ वाजिनामावाहनं विद्यते यथान्यासां देवतानाम् १३ हविरनियतत्वाद्वा न विद्यते यथा विष्णोरुरुक्रमस्य १४ एतादृगिति मन्यामहे पुरःप्रवृद्धानां परतन्त्रव्यपेतानां प्रतिषेधः तल्लिङ्गत्वाच्छब्दस्य १५ एकदेवतानां नानादेवतव्यपेतातां तन्त्रमावाहनं विभवात् १६ कालपृथक्त्वादभ्यावर्तेत १७ पशावुत्तमे प्रयाजे स्रुगादापनो न विद्यते

संप्रेषितत्वात् १८ विद्यते वाऽन्यकालत्वाद्यथा याज्यासम्प्रैषो यथा याज्यासम्प्रैषः १९

इति सङ्कर्षकाण्डे चतुर्थस्याध्यायस्य चतुर्थः पादः

समाप्तं चेदं सङ्कर्षकाण्डम्

इति कर्ममीमांसादर्शनम्

Reference for Chapters 13-16:
*Saṅkarṣhakāṇḍa,Maharṣhi Jaiminimuninā praṇītaṁ Devaswāmīviracitabhaṣhyamanvalitam.* Ed. by S. Subrahmanya Shastri, University of Madras, 1965.

# महर्षि बादरायण प्रणीतं वेदान्तदर्शनम्

## वेदान्तदर्शनम्

### प्रथमोऽध्यायः प्रथमः पादः

१ (१) अथातो ब्रह्मजिज्ञासा १
२ (२) जन्माद्यस्य यतः २
३ (३) शास्त्रयोनित्वात् ३
४ (४) तत्तु समन्वयात् ४
५ (५) ईक्षतेर्नाशब्दम् ५ गौणश्चेन्नात्मशब्दात् ६ तन्निष्ठस्य मोक्षोपदेशात् ७ हेयत्वावचनाच्च ८ स्वाप्ययात् ९ गतिसामान्यात् १० श्रुतत्वाच्च ११
६ (६) आनन्दमयोऽभ्यासात् १२ विकारशब्दान्नेति चेन्न प्राचुर्यात् १३ तद्धेतुव्यपदेशाच्च १४ मान्त्रवर्णिकमेव च गीयते १५ नेतरोऽनुपपत्तेः १६ भेदव्यपदेशाच्च १७ कामाच्च नानुमानापेक्षा १८ अस्मिन्नस्य च तद्योगं शास्ति १९
७ (७) अन्तस्तद्धर्मोपदेशात् २० भेदव्यपदेशाच्चान्यः २१
८ (८) आकाशस्तल्लिङ्गात् २२
९ (९) अत एव प्राणः २३
१० (१०) ज्योतिश्चरणाभिधानात् २४ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् २५ भूतादिपादव्यपदेशोपपत्तेश्चैवम् २६ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् २७
११ (११) प्राणस्तथानुगमात् २८ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् २९ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ३० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ३१

इति प्रथमः पादः

### द्वितीयः पादः

१ (१२) सर्वत्र प्रसिद्धोपदेशात् १ विवक्षितगुणोपपत्तेश्च २

अनुपपत्तेस्तु न शारीरः ३ कर्मकर्तृव्यपदेशाच्च ४
शब्दविशेषात् ५ स्मृतेश्च ६ अर्भकौकस्त्वात्तद्व्यपदे-
शाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ७
सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ८

२ (१३) अत्ता चराचरग्रहणात् ९ प्रकरणाच्च १०

३ (१४) गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ११ विशेषणाच्च
१२

४ (१५) अन्तर उपपत्तेः १३ स्थानादिव्यपदेशाच्च १४
सुखविशिष्टाभिधानादेव च १५ श्रुतोपनिषत्कगत्यभि-
धानाच्च १६ अनवस्थितेरसम्भवाच्च नेतरः १७

५ (१६) अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १८ न च
स्मार्तमतद्धर्माभिलापात् १९ शारीरश्चोभयेऽपि हि
भेदेनैनमधीयते २०

६ (१७) अदृश्यत्वादिगुणको धर्मोक्तेः २१ विशेषणभेदव्यपदे-
शाभ्यां च नेतरौ २२ रूपोपन्यासाच्च २३

७ (१८) वैश्वानरः साधारणशब्दविशेषात् २४ स्मर्यमाणमनुमानं
स्यादिति २५ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न
तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते २६
अत एव न देवता भूतं च २७ साक्षादप्यविरोधं
जैमिनिः २८ अभिव्यक्तेरित्याश्मरथ्यः २९ अनुस्मृते-
र्बादरिः ३० सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ३१
आमनन्ति चैनमस्मिन् ३२

इति द्वितीयः पादः

तृतीयः पादः

१ (१९) द्युभ्वाद्यायतनं स्वशब्दात् १ मुक्तोपसृप्यव्यपदेशात् २
नानुमानमतच्छब्दात् ३ प्राणभृच्च ४ भेदव्यपदेशात् ५
प्रकरणात् ६ स्थित्यदनाभ्यां च ७

२ (२०) भूमा सम्प्रसादादध्युपदेशात् ८ धर्मोपपत्तेश्च ९

३ (२१) अक्षरमम्बरान्तधृतेः १० सा च प्रशासनात् ११
अन्यभावव्यावृत्तेश्च १२
४ (२२) ईक्षतिकर्मव्यपदेशात्सः १३
५ (२३) दहर उत्तरेभ्यः १४ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं
च १५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १६ प्रसिद्धेश्च
१७ इतरपरामर्शात्स इति चेन्नासम्भवात् १८ उत्तराच्चे-
दाविर्भूतस्वरूपस्तु १९ अन्यार्थश्च परामर्शः २०
अल्पश्रुतेरिति चेत्तदुक्तम् २१
६ (२४) अनुकृतेस्तस्य च २२ अपि च स्मर्यते २३
७ (२५) शब्दादेव प्रमितः २४ हृद्यपेक्षया तु मनुष्याधिकारत्वात्
२५
८ (२६) तदुपर्यपि बादरायणः सम्भवात् २६ विरोधः कर्मणीति
चेन्नानेकप्रतिपत्तेर्दर्शनात् २७ शब्द इति चेन्नातः
प्रभवात्प्रत्यक्षानुमानाभ्याम् २८ अत एव च नित्यत्वम्
२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च
३० मध्वादिष्वसम्भवादनधिकारं जैमिनिः ३१
ज्योतिषि भावाच्च ३२ भावं तु बादरायणोऽस्ति हि ३३
९ (२७) शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ३४
क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ३५ संस्कारपरा-
मर्शात्तदभावाभिलापाच्च ३६ तदभावनिर्धारणे च प्रवृत्तेः
३७ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ३८
१० (२८) कम्पनात् ३९
११ (२९) ज्योतिर्दर्शनात् ४०
१२ (३०) आकाशोऽर्थान्तरत्वादिव्यपदेशात् ४१
१३ (३१) सुषुप्त्युत्क्रान्त्योर्भेदेन ४२ पत्यादिशब्देभ्यः ४३
इति तृतीयः पादः

## चतुर्थः पादः

१ (३२) आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृही-

तेर्दर्शयति च १ सूक्ष्मं तु तदर्हत्वात् २ तदधीनत्वा-
दर्थवत् ३ ज्ञेयत्वावचनाच्च ४ वदतीति चेन्न प्राज्ञो हि
प्रकरणात् ५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६
महद्वच्च ७

२ (३३) चमसवदविशेषात् ८ ज्योतिरुपक्रमा तु तथा ह्यधीयत
एके ९ कल्पनोपदेशाच्च मध्वादिवदविरोधः १०

३ (३४) न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ११
प्राणादयो वाक्यशेषात् १२ ज्योतिषैकेषामसत्यन्ने १३

४ (३५) कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४
समाकर्षात् १५

५ (३६) जगद्वाचित्वात् १६ जीवमुख्यप्राणलिङ्गान्नेति
चेत्तद्व्याख्यातम् १७ अन्यार्थं तु जैमिनिः
प्रश्नव्याख्यानाभ्यामपि चैवमेके १८

६ (३७) वाक्यान्वयात् १९ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः २०
उत्क्रमिष्यत एवं भावादित्यौडुलोमिः २१
अवस्थितेरिति काशकृत्स्नः २२

७ (३८) प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् २३ अभिध्योपदेशाच्च
२४ साक्षाच्चोभयाम्नानात् २५ आत्मकृतेः परिणामात्
२६ योनिश्च हि गीयते २७

८ (३९) एतेन सर्वे व्याख्याता व्याख्याताः २८

इति चतुर्थः पादः इति प्रथमोऽध्यायः

## द्वितीयोऽध्यायः प्रथमः पादः

१ (४०) स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष-
प्रसङ्गात् १ इतरेषां चानुपलब्धेः २

२ (४१) एतेन योगः प्रत्युक्तः ३

३ (४२) न विलक्षणत्वादस्य तथात्वं च शब्दात् ४ अभिमानि-
व्यपदेशस्तु विशेषानुगतिभ्याम् ५ दृश्यते तु ६
असदिति चेन्न प्रतिषेधमात्रत्वात् ७ अपीतौ

तद्वत्प्रसङ्गादसमञ्जसम् ८ न तु दृष्टान्तभावात् ९
स्वपक्षदोषाच्च १० तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति
चेदेवमप्यविमोक्षप्रसङ्गः ११

४ (४३) एतेन शिष्टापरिग्रहा अपि व्याख्याताः १२

५ (४४) भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् १३

६ (४५) तदनन्यत्वमारम्भणशब्दादिभ्यः १४ भावे चोपलब्धेः
१५ सत्त्वाच्चावरस्य १६ असद्व्यपदेशान्नेति चेन्न
धर्मान्तरेण वाक्यशेषात् १७ युक्तेः शब्दान्तराच्च १८
पटवच्च १९ यथा च प्राणादि २०

७ (४६) इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१ अधिकं तु
भेदनिर्देशात् २२ अश्मादिवच्च तदनुपपत्तिः २३

८ (४७) उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २४ देवादिवदपि
लोके २५

९ (४८) कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा २६ श्रुतेस्तु
शब्दमूलत्वात् २७ आत्मनि चैवं विचित्राश्च हि २८
स्वपक्षदोषाच्च २९

१० (४९) सर्वोपेता च तद्दर्शनात् ३० विकरणत्वान्नेति चेत्तदुक्तम्
३१

११ (५०) न प्रयोजनवत्त्वात् ३२ लोकवत्तु लीलाकैवल्यम् ३३
वैषम्यनैर्घृण्ये न

१२ (५१) सापेक्षत्वात्तथा हि दर्शयति ३४ न कर्माविभागादिति
चेन्नानादित्वात् ३५ उपपद्यते चाप्युपलभ्यते च ३६

१३ (५२) सर्वधर्मोपपत्तेश्च ३७

इति प्रथमः पादः

## द्वितीयः पादः

१ (५३) रचनानुपपत्तेश्च नानुमानम् १ प्रवृत्तेश्च २
पयोऽम्बुवच्चेत्तत्रापि ३ व्यतिरेकानवस्थितेश्चानपेक्षत्वात्
४ अन्यत्राभावाच्च न तृणादिवत् ५ अभ्युपगमेऽप्यर्था-

भावात् ६ पुरुषाश्मवदिति चेत्तथापि ७
अङ्गित्वानुपपत्तेश्च ८ अन्यथानुमितौ च
ज्ञशक्तिवियोगात् ९ विप्रतिषेधाच्चासमञ्जसम् १०

२ (५४) महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ११

३ (५५) उभयथापि न कर्मातस्तदभावः १२ समवायाभ्युपग-
माच्च साम्यादनवस्थितेः १३ नित्यमेव च भावात् १४
रूपादिमत्त्वाच्च विपर्ययो दर्शनात् १५ उभयथा च
दोषात् १६ अपरिग्रहाच्चात्यन्तमनपेक्षा १७

४ (५६) समुदाय उभयहेतुकेऽपि तदप्राप्तिः १८ इतरेतरप्रत्यय-
त्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् १९ उत्तरोत्पादे च
पूर्वनिरोधात् २० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा
२१ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २२
उभयथा च दोषात् २३ आकाशे चाविशेषात् २४
अनुस्मृतेश्च २५ नासतोऽदृष्टत्वात् २६
उदासीनानामपि चैवं सिद्धिः २७

५ (५७) नाभाव उपलब्धेः २८ वैधर्म्याच्च न स्वप्नादिवत् २९
न भावोऽनुपलब्धेः ३० क्षणिकत्वाच्च ३१ सर्वथानुप-
पत्तेश्च ३२

६ (५८) नैकस्मिन्नसम्भवात् ३३ एवं चात्माकार्त्स्न्यम् ३४ न
च पर्यायादप्यविरोधो विकारादिभ्यः ३५ अन्त्याव-
स्थितेश्चोभयनित्यत्वादविशेषः ३६

७ (५९) पत्युरसामञ्जस्यात् ३७ सम्बन्धानुपपत्तेश्च ३८ अधि-
ष्ठानानुपपत्तेश्च ३९ करणवच्चेन्न भोगादिभ्यः ४०
अन्तवत्त्वमसर्वज्ञता वा ४१

८ (६०) उत्पत्त्यसम्भवात् ४२ न च कर्तुः करणम् ४३
विज्ञानादिभावे वा तदप्रतिषेधः ४४ विप्रतिषेधाच्च
४५

इति द्वितीयः पादः

## तृतीयः पादः

१ (६१) न वियदश्रुतेः १ अस्ति तु २ गौणयसम्भवात् ३
शब्दाच्च ४ स्याच्चैकस्य ब्रह्मशब्दवत् ५ प्रतिज्ञाहानि-
रव्यतिरेकाच्छब्देभ्यः ६ यावद्विकारं तु विभागो
लोकवत् ७
२ (६२) एतेन मातरिश्वा व्याख्यातः ८
३ (६३) असम्भवस्तु सतोऽनुपपत्तेः ९
४ (६४) तेजोऽतस्तथा ह्याह १०
५ (६५) आपः ११
६ (६६) पृथिव्यधिकाररूपशब्दान्तरेभ्यः १२
७ (६७) तदभिध्यानादेव तु तल्लिङ्गात्सः १३
८ (६८) विपर्ययेण तु क्रमोऽत उपपद्यते च १४
९ (६९) अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्
१५
१० (७०) चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावि-
त्वात् १६
११ (७१) नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः १७
१२ (७२) ज्ञोऽत एव १८
१३ (७३) उत्क्रान्तिगत्यागतीनाम् १९ स्वात्मना चोत्तरयोः २०
नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २१
स्वशब्दोन्मानाभ्यां च २२ अविरोधश्चन्दनवत् २३
अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २४
गुणाद्वा लोकवत् २५ व्यतिरेको गन्धवत् २६ तथा
च दर्शयति २७ पृथगुपदेशात् २८ तद्गुणसारत्वात्तु
तद्व्यपदेशः प्राज्ञवत् २९ यावदात्मभावित्वाच्च न
दोषस्तद्दर्शनात् ३० पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति-
योगात् ३१ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो
वान्यथा ३२
१४ (७४) कर्ता शास्त्रार्थवत्त्वात् ३३ विहारोपदेशात् ३४

उपादानात् ३५ व्यपदेशाच्च क्रियायां न
चेन्निर्देशविपर्ययः ३६ उपलब्धिवदनियमः ३७
शक्तिविपर्ययात् ३८ समाध्यभावाच्च ३९

१५ (७५) यथा च तक्षोभयथा ४०

१६ (७६) परात्तु तच्छ्रुतेः ४१ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा-
वैयर्थ्यादिभ्यः ४२

१७ (७७) अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधी-
यत एके ४३ मन्त्रवर्णाच्च ४४ अपि च स्मर्यते ४५
प्रकाशादिवन्नैवं परः ४६ स्मरन्ति च ४७
अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ४८
असंततेश्चाव्यतिकरः ४९ आभास एव च ५०
अदृष्टानियमात् ५१ अभिसंध्यादिष्वपि चैवम् ५२
प्रदेशादिति चेन्नान्तर्भावात् ५३

इति तृतीयः पादः

## चतुर्थः पादः

१ (७८) तथा प्राणाः १ गौणयसम्भवात् २ तत्प्राक्श्रुतेश्च ३
तत्पूर्वकत्वाद्वाचः ४

२ (७९) सप्त गतेर्विशेषितत्वाच्च ५ हस्तादयस्तु स्थितेऽतो नैवम्
६

३ (८०) अणवश्च ७

४ (८१) श्रेष्ठश्च ८

५ (८२) न वायुक्रिये पृथगुपदेशात् ९ चक्षुरादिवत्तु तत्सहशि-
ष्ट्यादिभ्यः १० अकरणत्वाच्च न दोषस्तथा हि दर्शयति
११ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते १२

६ (८३) अणुश्च १३

७ (८४) ज्योतिराद्यधिष्ठानं तु तदामननात् १४ प्राणवता शब्दात्
१५ तस्य च नित्यत्वात् १६

८ (८५) त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् १७ भेदश्रुतेः

१८ वैलक्षरयाच्च १९
९ (८६) संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् २० मांसादि भौमं यथाशब्दमितरयोश्च २१ वैशेष्यात्तु तद्वादस्तद्वादः २२

इति चतुर्थः पादः इति द्वितीयोऽध्यायः

तृतीयोऽध्यायः प्रथमः पादः

१ (८७) तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्
१ त्र्यात्मकत्वात्तु भूयस्त्वात् २ प्राणगतेश्च ३
अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ४
प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपतेः ५
अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ६
भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ७
२ (८८) कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ८
चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ९
आनर्थक्यमिति चेन्न तदपेक्षत्वात् १० सुकृतदुष्कृते एवेति तु बादरिः ११
३ (८९) अनिष्टादिकारिणामपि च श्रुतम् १२ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् १३ स्मरन्ति च १४ अपि च सप्त १५ तत्रापि च तद्व्यापारादविरोधः १६ विद्याकर्मणोरिति तु प्रकृतत्वात् १७ न तृतीये तथोपलब्धः १८ स्मर्यतेऽपि च लोके १९ दर्शनाच्च २० तृतीयशब्दावरोधः संशोकजस्य २१
४ (९०) साभाव्यापत्तिरुपपत्तेः २२
५ (९१) नातिचिरेण विशेषात् २३
६ (९२) अन्याधिष्ठितेषु पूर्ववदभिलापात् २४ अशुद्धमिति चेन्न शब्दात् २५ रेतःसिग्योगोऽथ २६ योनेः शरीरम् २७

इति प्रथमः पादः

## द्वितीयः पादः

१ (९३) संध्ये सृष्टिराह हि १ निर्मातारं चैके पुत्रादयश्च २
मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ३
सूचकश्च हि श्रुतेराचक्षते च तद्विदः ४ पराभिध्यानात्तु
तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ५ देहयोगाद्वा
सोऽपि ६

२ (९४) तदभावो नाडीषु तच्छ्रुतेरात्मनि च ७ अतः
प्रबोधोऽस्मात् ८

३ (९५) स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ९

४ (९६) मुग्धेऽर्धसम्पत्तिः परिशेषात् १०

५ (९७) न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ११ न
भेदादिति चेन्न प्रत्येकमतद्वचनात् १२ अपि चैवमेके
१३ अरूपवदेव हि तत्प्रधानत्वात् १४
प्रकाशवच्चावैयर्थ्यात् १५ आह च तन्मात्रम् १६
दर्शयति चाथो अपि स्मर्यते १७ अत एव चोपमा
सूर्यकादिवत् १८ अम्बुवदग्रहणात्तु न तथात्वम् १९
वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् २०
दर्शनाच्च २१

६ (९८) प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः २२
तदव्यक्तमाह हि २३ अपि च संराधने
प्रत्यक्षानुमानाभ्याम् २४ प्रकाशादिवच्चावैशेष्यं
प्रकाशश्च कर्मण्यभ्यासात् २५ अतोऽनन्तेन तथा हि
लिङ्गम् २६ उभयव्यपदेशात्त्वहिकुण्डलवत् २७
प्रकाशाश्रयवद्वा तेजस्त्वात् २८ पूर्ववद्वा २९
प्रतिषेधाच्च ३०

७ (९९) परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ३१
सामान्यात्तु ३२ बुद्ध्यर्थः पादवत् ३३ स्थानविशेषा-
त्प्रकाशादिवत् ३४ उपपत्तेश्च ३५ तथान्यप्रतिषेधात्
३६ अनेन सर्वगतत्वमायामशब्दादिभ्यः ३७

८ (१००) फलमत उपपत्तेः ३८ श्रुतत्वाच्च ३९ धर्मं जैमिनिरत एव ४० पूर्वं तु बादरायणो हेतुव्यपदेशात् ४१

इति द्वितीयः पादः

तृतीयः पादः

१ (१०१) सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् १ भेदान्नेति चेन्नैकस्यामपि २ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३ दर्शयति च ४

२ (१०२) उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ५

३ (१०३) अन्यथात्वं शब्दादिति चेन्नाविशेषात् ६ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ७ संज्ञातश्चेत्तदुक्त-मस्ति तु तदपि ८

४ (१०४) व्याप्तेश्च समञ्जसम् ९

५ (१०५) सर्वाभेदादन्यत्रेमे १०

६ (१०६) आनन्दादयः प्रधानस्य ११ प्रियशिरस्त्वाद्यप्राप्तिरुपच-यापचयौ हि भेदे १२ इतरे त्वर्थसामान्यात् १३

७ (१०७) आध्यानाय प्रयोजनाभावात् १४ आत्मशब्दाच्च १५

८ (१०८) आत्मगृहीतिरितरवदुत्तरात् १६ अन्वयादिति चेत्स्यादवधारणात् १७

९ (१०९) कार्याख्यानादपूर्वम् १८

१० (११०) समान एवं चाभेदात् १९

११ (१११) सम्बन्धादेवमन्यत्रापि २० न वा विशेषात् २१ दर्शयति च २२

१२ (११२) सम्भृतिद्युव्याप्त्यपि चातः २३

१३ (११३) पुरुषविद्यायामिव चेतरेषामनाम्नानात् २४

१४ (११४) वेधाद्यर्थभेदात् २५

१५ (११५) हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदु-क्तम् २६

१६ (११६) साम्पराये तर्तव्याभावात्तथा ह्यन्ये २७ छन्दत
उभयाविरोधात् २८
१७ (११७) गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः २९ उपपन्नस्त-
ल्लक्षणार्थोपलब्धेर्लोकवत् ३०
१८ (११८) अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ३१
१९ (११९) यावदधिकारमवस्थितिराधिकारिकाणाम् ३२
२० (१२०) अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदु-
क्तम् ३३
२१ (१२१) इयदामननात् ३४
२२ (१२२) अन्तरा भूतग्रामवत्स्वात्मनः ३५ अन्यथा
भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ३६
२३ (१२३) व्यतिहारो विशिंषन्ति हीतरवत् ३७
२४ (१२४) सैव हि सत्यादयः ३८
२५ (१२५) कामादीतरत्र तत्र चायतनादिभ्यः ३९
२६ (१२६) आदरादलोपः ४० उपस्थितेऽतस्तद्वचनात् ४१
२७ (१२७) तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ४२
२८ (१२८) प्रदानवदेव तदुक्तम् ४३
२९ (१२९) लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ४४ पूर्वविकल्पः
प्रकरणात्स्यात्क्रिया मानसवत् ४५ अतिदेशाच्च ४६
विद्यैव तु निर्धारणात् ४७ दर्शनाच्च ४८
श्रुत्यादिबलीयस्त्वाच्च न बाधः ४९ अनुबन्धादिभ्यः
प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ५० न सामान्यादप्यु-
पलब्धेर्मृत्युवन्न हि लोकापत्तिः ५१ परेण च शब्दस्य
ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ५२
३० (१३०) एक आत्मनः शरीरे भावात् ५३ व्यतिरेकस्तद्भावा-
भावित्वान्न तूपलब्धिवत् ५४
३१ (१३१) अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ५५
मन्त्रादिवद्वाविरोधः ५६
३२ (१३२) भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ५७

३३ (१३३) नाना शब्दादिभेदात् ५८
३४ (१३४) विकल्पोऽविशिष्टफलत्वात् ५९
३५ (१३५) काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ६०
३६ (१३६) अङ्गेषु यथाश्रयभावः ६१ शिष्टेश्च ६२ समाहारात् ६३ गुणसाधारण्यश्रुतेश्च ६४ न वा तत्सहभावाश्रुतेः ६५ दर्शनाच्च ६६

इति तृतीयः पादः

चतुर्थः पादः

१ (१३७) पुरुषार्थोऽतः शब्दादिति बादरायणः १ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः २ आचारदर्शनात् ३ तच्छ्रुतेः ४ समन्वारम्भणात् ५ तद्वतो विधानात् ६ नियमाच्च ७ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ८ तुल्यं तु दर्शनम् ९ असार्वत्रिकी १० विभागः शतवत् ११ अध्ययनमात्रवतः १२ नाविशेषात् १३ स्तुतयेऽनुमतिर्वा १४ कामकारेण चैके १५ उपमर्दं च १६ ऊर्ध्वरेतःसु च शब्दे हि १७
२ (१३८) परामर्शं जैमिनिरचोदना चापवदति हि १८ अनुष्ठेयं बादरायणः साम्यश्रुतेः १९ विधिर्वा धारणवत् २०
३ (१३९) स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् २१ भावशब्दाच्च २२
४ (१४०) पारिप्लवार्था इति चेन्न विशेषितत्वात् २३ तथा चैकवाक्यतोपबन्धात् २४
५ (१४१) अत एव चाग्नीन्धनाद्यनपेक्षा २५
६ (१४२) सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् २६ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् २७

७ (१४३) सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् २८ अबाधाच्च
२९ अपि च स्मर्यते ३० शब्दश्चातोऽकामकारे ३१
८ (१४४) विहितत्वाच्चाश्रमकर्मापि ३२ सहकारित्वेन च ३३
सर्वथापि त एवोभयलिङ्गात् ३४ अनभिभवं च
दर्शयति ३५
९ (१४५) अन्तरा चापि तु तद्दृष्टेः ३६ अपि च स्मर्यते ३७
विशेषानुग्रहश्च ३८ अतस्त्वितरज्ज्यायो लिङ्गाच्च ३९
१० (१४६) तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः
४०
११ (१४७) न चाधिकारिकमपि पतनानुमानात्तदयोगात् ४१
उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ४२
१२ (१४८) बहिस्तूभयथापि स्मृतेराचाराच्च ४३
१३ (१४९) स्वामिनः फलश्रुतेरित्यात्रेयः ४४ आर्त्विज्यमित्यौडु-
लोमिस्तस्मै हि परिक्रीयते ४५ श्रुतेश्च ४६
१४ (१५०) सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्
४७ कृत्स्नभावात्तु गृहिणोपसंहारः ४८
मौनवदितरेषामप्युपदेशात् ४९
१५ (१५१) अनाविष्कुर्वन्नन्वयात् ५०
१६ (१५२) ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ५१
१७ (१५३) एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः
५२

इति चतुर्थः पादः इति तृतीयोऽध्यायः

## चतुर्थोऽध्यायः प्रथमः पादः

१ (१५४) आवृत्तिरसकृदुपदेशात् १ लिङ्गाच्च २
२ (१५५) आत्मेति तूपगच्छन्ति ग्राहयन्ति च ३
३ (१५६) न प्रतीके न हि सः ४
४ (१५७) ब्रह्मदृष्टिरुत्कर्षात् ५
५ (१५८) आदित्यादिमतयश्चाङ्ग उपपत्तेः ६

६ (१५९) आसीनः सम्भवात् ७ ध्यानाच्च ८ अचलत्वं चापेक्ष्य ९ स्मरन्ति च १०
७ (१६०) यत्रैकाग्रता तत्राविशेषात् ११
८ (१६१) आ प्रायणात्तत्रापि हि दृष्टम् १२
९ (१६२) तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् १३
१० (१६३) इतरस्याप्येवमसंश्लेषः पाते तु १४
११ (१६४) अनारब्धकार्ये एव तु पूर्वे तदवधेः १५
१२ (१६५) अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् १६ अतोऽन्यापि ह्येकेषामुभयोः १७
१३ (१६६) यदेव विद्ययेति हि १८
१४ (१६७) भोगेन त्वितरे क्षपयित्वा सम्पद्यते १९

इति प्रथमः पादः

द्वितीयः पादः

१ (१६८) वाङ्मनसि दर्शनाच्छब्दाच्च १ अत एव च सर्वाण्यनु २
२ (१६९) तन्मनः प्राण उत्तरात् ३
३ (१७०) सोऽध्यक्षे तदुपगमादिभ्यः ४ भूतेषु तच्छ्रुतेः ५ नैकस्मिन्दर्शयतो हि ६
४ (१७१) समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ७
५ (१७२) तदापीतेः संसारव्यपदेशात् ८ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ९ नोपमर्देनातः १० अस्यैव चोपपत्तेरेष ऊष्मा ११
६ (१७३) प्रतिषेधादिति चेन्न शारीरात् १२ स्पष्टो ह्येकेषाम् १३ स्मर्यते च १४
७ (१७४) तानि परे तथा ह्याह १५
८ (१७५) अविभागो वचनात् १६
९ (१७६) तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया १७

१० (१७७) रश्म्यनुसारी १८ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च १९

११ (१७८) अतश्चायनेऽपि दक्षिणे २० योगिनः प्रति च स्मर्यते स्मार्ते चैते २१

इति द्वितीयः पादः

तृतीयः पादः

१ (१७९) अर्चिरादिना तत्प्रथितेः १

२ (१८०) वायुमब्दादविशेषविशेषाभ्याम् २

३ (१८१) तडितोऽधि वरुणः सम्बन्धात् ३

४ (१८२) आतिवाहिकास्तल्लिङ्गात् ४ उभयव्यामोहात्तत्सिद्धेः ५ वैद्युतेनैव ततस्तच्छ्रुतेः ६

५ (१८३) कार्यं बादरिरस्य गत्युपपत्तेः ७ विशेषितत्वाच्च ८ सामीप्यात्तु तद्व्यपदेशः ९ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् १० स्मृतेश्च ११ परं जैमिनिर्मुख्यत्वात् १२ दर्शनाच्च १३ न च कार्ये प्रतिपत्त्यभिसंधिः १४

६ (१८४) अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च १५ विशेषं च दर्शयति १६

इति तृतीयः पादः

चतुर्थः पादः

१ (१८५) सम्पद्याविर्भावः स्वेनशब्दात् १ मुक्तः प्रतिज्ञानात् २ आत्मा प्रकरणात् ३

२ (१८६) अविभागेन दृष्टत्वात् ४

३ (१८७) ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ५ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ६ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ७

४ (१८८) संकल्पादेव तु तच्छ्रुतेः ८ अत एव चानन्याधिपतिः ९

५ (१८९) अभावं बादरिराह ह्येवम् १० भावं जैमिनिर्विकल्पामननात् ११ द्वादशाहवदुभयविधं बादरायणोऽतः १२ तन्वभावे संध्यवदुपपत्तेः १३ भावे जाग्रद्वत् १४

६ (१९०) प्रदीपवदावेशस्तथा हि दर्शयति १५ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि १६

७ (१९१) जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च १७ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः १८ विकारावर्ति च तथा हि स्थितिमाह १९ दर्शयतश्चैवं प्रत्यक्षानुमाने २० भोगमात्रसाम्यलिङ्गाच्च २१ अनावृत्तिः शब्दादनावृत्तिः शब्दात् २२

इति चतुर्थः पादः इति चतुर्थोऽध्यायः

इति वेदान्तदर्शनम्

Reference: Swami Gambhirananda, *Brahma-Sūtra-Bhāṣya of Śrī Śaṅkarā--cārya*, (Calcutta: Advaita Ashrama, 1983).